संख्यापदार्थमन्यमाह 'समाख्या' इत्यादि। सर्वासां शाखानां हि काठक-कालापकाद्याः समाख्याः संज्ञाविशेषाः श्रूयन्ते ते च नाध्ययनमात्रनिबन्धनाः। अध्येतॄणामानन्त्यात्, आदावन्यैरपि तदध्ययनात्। तस्मादतीन्द्रियार्थदर्शी भगवानेव कारुणिकः सर्गादावस्मदाद्यदृष्टाकृष्टकाठकादिशरीरविशेषमधिष्ठाय यां शाखामुक्तवान् तस्याः शाखायास्तन्नाम्ना व्यपदेश इति सिद्धमीश्वरमननं मोक्षहेतुः ॥ १६ ॥

यस्येश्वरे न विश्वासस्तं प्रत्याह—

**इत्येवं श्रुतिनीतिसम्प्लवजलैर्भूयोभिराक्षालिते**
**येषां नास्पदमादधासि हृदये ते शैलसाराशयाः।**

---

पुरुष गत संख्या [ ही ] वाच्य है। [उस संख्यासे संख्याके आश्रयभूत प्रवक्ता ईश्वरकी सिद्धि होती है। यह अभिप्राय है ]।

'संख्या' शब्दका दूसरा अर्थ कहते हैं 'सामाख्या' इत्यादि। [ वेदोंकी ] सब शाखाओंकी 'काठक' 'कालापक' आदि [ अलग-अलग अनेक ] विशेष संज्ञाएँ [ श्रुतियों में ] सुनाई देती हैं। वह संज्ञाएँ केवल उन [ शाखाओं ] के अध्येताओंके कारण [ अर्थात् उनके नाम पर ] नहीं हो सकतीं। अध्येताओंके अनन्त होने और उनके पूर्व भी अन्योंसे अध्ययन किए जानेके कारण। [ किसी अध्येताके नामपर काठक आदि शाखाओंका नामकरण सम्भव नहीं है ]। इसलिए अतीन्द्रिय [ अप्रत्यक्ष ] अर्थोंका [ भी ] साक्षात्कार करनेवाले परम कारुणिक भगवान्ने ही सृष्टिके आदिमें अस्मदादिके अदृष्ट वश उत्पन्न काठकादि शरीर विशेषको ग्रहण कर जिस शाखाका उपदेश दिया है वह शाखाका उस नामसे प्रसिद्ध है।

[ जैसा कि प्रथम स्तबकके प्रारम्भमें कहा जा चुका है ग्रन्थकारने इस ग्रन्थकी रचना ईश्वर मननके लिए की थी। इन पाँच स्तबकोंमें उसके विषयमें पर्याप्त मनन किया जा चुका है इसलिए ग्रन्थका उपसंहार करते हुए टीकाकार कहते हैं ]।

इस प्रकार ईश्वरका मनन मोक्षका हेतु है यह सिद्ध हो गया है।

आगे कारिकाकार श्रीमान् उदयनाचार्य अपने ग्रन्थका उपसंहार करते हुए कहते हैं—

जिसका ईश्वरमें विश्वास नहीं है उसके प्रति [ अर्थात् उसके विषयमें ] कहते हैं—

इस प्रकार श्रुति [ आगम ] और नीति [ अर्थात् न्याय, अनुमानादि ] के साहित्य रूप प्रचुर जलसे धोए गए [ शङ्का आदि मलको युक्ति तथा अनुमानादि द्वारा प्रभूत जलोंसे धोकर शुद्ध किए हुए ] [जिन [ नास्तिकों ] के हृदयमें [ हे भगवन् ] आप प्रतिष्ठित नहीं होते हो [ जिनको आपके प्रति श्रद्धा और विश्वास नहीं होता है ] वे

किन्तु प्रस्तुतविप्रतीपविधयोऽप्युच्चैर्भवच्चिन्तकाः
काले कारुणिक! त्वयैव कृपया ते तारणीया नराः॥१०॥

इति शब्दः स्वरूपे। एवं शब्दः प्रकारार्थः। शैलसारो लोहमतिकठिनशिला वा प्रस्तुते ईश्वरे विप्रतीपविधयः प्रतिकूलपराः। तादृशा अपि उच्चैरतिशयेन काले भवच्चिन्तकाः। शङ्काकलङ्कशून्याः कार्याः॥ १७॥

अस्माकन्तु निसर्गसुन्दर चिराच्चेतो निमग्नं त्वयी-
त्यद्धानन्दनिधौ तथापि तरलं नाद्यापि सन्तृप्यते।
तन्नाथ! त्वरितं विधेहि करुणां येन त्वदेकाग्रतां
याते चेतसि नाप्नुवाम शतशो याम्याः पुनर्यातनाः॥

---

[ निश्चय ही ] लोहे अथवा कठिन पाषाण शिलाके समान वज्र हृदयवाले हैं। किन्तु प्रस्तुत [ अर्थात् ईश्वर ] के विषयमें प्रतिकूल परायण होनेपर भी अवसर पड़नेपर [ आपत्ति कालमें ] आपका अत्यन्त [ उच्चैः ] ध्यान करनेवाले उन पुरुषोंको हे करुणामय भगवन् आप ही तारें अर्थात् शङ्का रूप कलङ्कसे रहित करें।

इस श्लोकके उत्तरार्द्धकी व्याख्या कुछ भेदसे दूसरे प्रकारसे भी की जासकती है। जिसका भाव यह होगा कि आपके अर्थात् ईश्वरके विरुद्ध विधिको प्रस्तुत करनेवाले होनेपर भी अर्थात् ईश्वरके खण्डनमें रत होनेपर भी वह आपके बड़े चिन्तक हैं। उन खण्डन करनेवालोंकी आस्तिकोंसे भी शायद अधिक आपकी चिन्ता रहती है क्योंकि वह हर समय आपका खण्डन करनेके लिए उद्यत रहते हैं। ईश्वरवादी शायद इतना आपका ध्यान नहीं रखते हैं। ऐसे नास्तिकोंको हे भगवन् समय पर या अन्तिम समयमें आप ही उद्धार करें। इस भावकी दूसरी व्याख्या भी होसकती है। परन्तु टीकाकारोंने पूर्व व्याख्या ही की है। मूल बड़ी कुसुमाञ्जलिमें तारणीयाकी जगह 'भावनीया' पाठ है।

इति शब्द स्वरूपार्थक और एवं शब्द प्रकारार्थक है। शैलसारा [ का अर्थ ] लोहा अथवा अति कठिन पाषाण शिला है। प्रस्तुत अर्थात् ईश्वरके विषयमें विप्रतीपविषयः अर्थात् प्रतिकूल परायण। ऐसे होनेपर भी काले समयपर आपके उच्चैः अतिशयेन चिन्तक शङ्का कलङ्क रहित करने योग्य हैं॥ १७॥

हे निसर्ग सुन्दर हमारा [ ग्रन्थकारका ] चित तो बहुत समयसे आपमें ही निमग्न है यह ठीक है फिर भी यह चञ्चल चित्त अभी तृप्त नहीं हुआ है। इसलिए हे नाथ! यथासम्भव शीघ्र ऐसी कृपा करो जिससे इस चित्तके सर्वथा तुममें लीन होजानेपर फिर बार-बार यमकी यातना [ जन्म मरण हमें ] न सहना पड़े॥ १८॥

अद्धा तत्त्वम् । सन्तृप्यत इति कर्मकर्तरि ।

इत्येष नीतिकुसुमाञ्जलिरुज्ज्वलश्री-
र्यद्वासयेदपि च दक्षिणवामकौ द्वौ ।
नो वा ततः किममरेशगुरोर्गुरुस्तु
प्रीतोऽस्त्वनेन पदपीठसमर्पणेन ॥ १९ ॥

इति श्रीमदुदयनाचार्यविरचितायां, न्यायकुसुमाञ्जलिकारिकायां
पञ्चमस्तबकः समाप्तः ।



---

इस प्रकार उज्ज्वल कान्तिवाला यह न्यायकुसुमाञ्जलि दक्षिण [ पन्थी ईश्वरवादी ] और वाम [ पन्थी अनीश्वरवादी ] दोनों [ हृदयों ] को [ ईश्वरकी श्रद्धारूप भावनाओंसे ] अधिवासित करे। [ उनके हृदयोंमें ईश्वरके प्रति श्रद्धा उत्पन्न करे। यही हमारी ग्रन्थकारकी कामना है। इतने पर भी यदि किसीके मनमें ईश्वरके प्रति विश्वास नहीं होता है तो ] अथवा न सही [और किसीके मनको अधिवासित न करे] तो क्या [हानि है ? कुछ नहीं ] अमरेश [ इन्द्र ] के गुरु [ बृहस्पति ] के भी गुरु [ स एव पूर्वेषामपि गुरुः कालेनानवच्छेदात् यो० १,२६ ] परमकारुणिक भगवान् [ तो इस अपने पाद रूप पीठ पर इस [ कुसुमाञ्जलि ] के समर्पणसे प्रसन्न हों अर्थात् इस ग्रन्थकी रचनासे और किसी आस्तिक या नास्तिकका उपकार न हो तो न सही। परन्तु हमारा यह प्रयत्न भगवान्को तो प्रसन्न करेगा ही इसीमें हमारे प्रयत्नकी सफलता है ]।

श्रीमान् उदयनाचार्य विरचित न्यायकुसुमाञ्जलि कारिका में यह पञ्चम
स्तबक समाप्त हुआ।



नो वासयेत् ततः किमस्माकम् ।

इति श्रीमद्-हरिदासभट्टाचार्य-विरचितं कुसुमाञ्जलिकारिका-
व्याख्यानं समाप्तम् ।



[ यह कुसुमाञ्जलि दक्षिण पन्थी अर्थात् ईश्वरवादी और वाम पन्थी अर्थात् अनीश्वरवादी इन दोनोंमें से किसीको ] अधिवासित न करे तो हमारी क्या [ हानि ] है ॥ १९ ॥

श्रीमान् हरिदास भट्टाचार्य द्वारा विरचित कुसुमाञ्जलिकारिका
व्याख्यान समाप्त हुआ ।



सिताश्विनचतुर्थीतः पञ्चविंशति वासरैः ।
पूर्ति परिमलः प्राप्तः द्विसहस्रेऽष्टकोत्तरे ॥

उत्तरप्रदेशस्थ-पीलीभीत-मण्डलान्तर्गत-मकतुल-ग्रामनिवासिनां, श्रीशिवलालमहोदयानां तनुजनुषा, वृन्दावनस्थ-गुरुकुल-विश्वविद्यालयाधीतविद्येन, तत्रत्याचार्यपदमधितिष्ठता, एम० ए० इत्युपपदधारिणा, श्रीविश्वेश्वर-सिद्धान्तशिरोमणिना विरचिते न्यायकुसुमाञ्जलि-परिमले पञ्चमः स्तबकः समाप्तः ।



समाप्तश्चायं ग्रन्थः ।



# न्यायकुसुमाञ्जलि-कारिका

## प्रथमः स्तबकः

मङ्गलाचरणम्—

सत्पक्षप्रसरः सतां परिमलप्रोद्बोधबद्धोत्सवो
विम्लानो न विमर्दनेऽमृतरसप्रस्यन्दमाध्वीकभूः ।
ईशस्यैष निवेशितः पदयुगे भृङ्गायमाणं भ्रम-
च्चेतो मे रमयत्वविघ्नमनघो न्यायप्रसूनाञ्जलिः ॥ १ ॥

विषयमुद्दिशति—

स्वर्गापवर्गयोर्मार्गमामनन्ति मनीषिणः ।
यदुपास्तिमसावत्र परमात्मा निरूप्यते ॥ २ ॥
न्यायचर्चेयमीशस्य मननव्यपदेशभाक् ।
उपासनैव क्रियते श्रवणानन्तरागता ॥ ३ ॥

कार्यकारणभावसाधनमदृष्टसिद्धिश्च—

सापेक्षत्वादनादित्वाद् वैचित्र्याद् विश्ववृत्तितः ।
प्रत्यात्मनियमाद् भुक्तेरस्ति हेतुरलौकिकः ॥ ४ ॥

सृष्टेराकस्मिकत्वं निराकरोति—

हेतुभूतनिषेधो न स्वानुपाख्यविधिर्न च ।
स्वभाववर्णना नैवमवधेर्नियतत्वतः ॥ ५ ॥

मीमांसकस्य शक्तिवादं निराकरोति—

प्रवाहो नादिमानेष न विजात्येकशक्तिमान् ।
तत्त्वे यत्नवता भाव्यमन्वयव्यतिरेकयोः ॥ ६ ॥

ब्रह्मकारणवादं प्रधानकारणवादं च निराकरोति—

एकस्य न क्रमः क्वापि वैचित्र्यञ्च समस्य न ।
शक्तिभेदो न चाभिन्नः स्वभावो दुरतिक्रमः ॥ ७ ॥

विचित्रं कारणं साधयति—

विफलाविश्ववृत्तिर्नो न दुःखैकफलापि वा ।
दृष्टलाभफला नापि विप्रलम्भोऽपि नेदृशः ॥ ८ ॥

अदृष्टं साधयति—

चिरध्वस्तं फलायालं न कर्मातिशयं विना ।
सम्भोगो निर्विशेषाणां न भूतैः संस्कृतैरपि ॥ ९ ॥

न्यायमते प्रतिबन्धकसंसर्गाभावस्य कारणत्वं साधयति—

भावो यथा तथाऽभावः कारणं कार्यवन्मतः ।
प्रतिबन्धो विसामग्री तद्धेतुः प्रतिबन्धकः ॥ १० ॥

संस्कारस्य भोग्यनिष्ठत्वं निराकरोति—

संस्कारः पुंस एवेष्टः प्रोक्षणाभ्युक्षणादिभिः ।
स्वगुणाः परमाणूनां विशेषाः पाकजादयः ॥ ११ ॥
निमित्तभेदसंसर्गादुद्भवानुद्भवादयः ।
देवताः सन्निधानेन प्रत्यभिज्ञानतोऽपि वा ॥ १२ ॥
जयेतरनिमित्तस्य वृत्तिलाभायकेवलम् ।
परीक्ष्यसमवेतस्य परीक्षाविधयो मताः ॥ १३ ॥

सांख्यमतं निराकरोति—

कर्तृधर्मानियन्तारश्चेतिता च स एव नः ।
अन्यथाऽनपवर्गः स्यादसंसारोऽथवा ध्रुवः ॥ १४ ॥

चार्वाकस्य देहात्मवादं निराकरोति—

नान्यदृष्टं स्मरत्यन्यो नैकं भूतमपक्रमात् ।
वासनासंक्रमो नास्ति न च गत्यन्तरं स्थिरे ॥ १५ ॥

बौद्धस्य क्षणिकत्वसिद्धान्तं निराकरोति—

न वैजात्यं विना तत् स्यान्न तस्मिन्ननुमा भवेत् ।
विना तेन न तत्सिद्धिर्नाध्यक्षं निश्चयं विना ॥ १६ ॥
स्थैर्यदृष्टयोर्न सन्देहो न प्रामाण्ये विरोधतः ।
एकतानिर्णयो येन क्षणे तेन स्थिरे मतः ॥ १७ ॥

कारणवादं प्रतिपादयति—

हेतुशक्तिमनाहत्य नीलाद्यपि न वस्तुसत् ।
तद्युक्तं तत्र तच्छक्तमिति साधारणं न किम् ॥ १८ ॥

आत्मनः कारणत्वं साधयति—

पूर्वाभावो हि हेतुत्वं मीयते येन केनचित् ।
व्यापकस्यापि नित्यस्य धर्मिधीरन्यथा नहि ॥ १९ ॥

स्तबकोपसंहारः—

इत्येषा सहकारिशक्तिरसमा मायादुरुन्नीतितो
मूलत्वात् प्रकृतिः प्रबोधभयतोऽविद्येति यस्योदिता ।
देवोऽसौ विरतप्रपञ्चरचनाकल्लोलकोलाहलः
साक्षात् साक्षितया मनस्यभिरतिं बध्नातु शान्तो मम ॥

इति श्रीमदुदयनाचार्यविरचितायां न्यायकुसुमाञ्जलिकारिकायां
प्रथमः स्तबकः ।



## द्वितीयः स्तबकः

वेदकर्तृत्वेन ईश्वरं साधयति—

प्रमायाः परतन्त्रत्वात् सर्गप्रलयसम्भवात् ।
तदन्यस्मिन्नविश्वासान्न विधान्तरसम्भवः ॥ १ ॥

प्रलयबाधकान् हेतून् निराकरोति—

वर्षादिवद् भवोपाधिर्वृत्तिरोधः सुषुप्तिवत् ।
उद्भिद्वृश्चिकवद् वर्णा मायावत् समयादयः ॥ २ ॥

प्रलयबाधकान् हेतूनुद्दिशति—

जन्मसंस्कारविद्यादेः शक्तेः स्वाध्यायकर्मणोः ।
ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयताम् ॥ ३ ॥

स्तबकोपसंहारः—

कारं कारमलौकिकाद्भुतमयं मायावशात् संहरन्
हारं हारमपीन्द्रजालमिव यः कुर्वन् जगत् क्रीडति ।
तं देवं निरवग्रहस्फुरदभिध्यानानुभावं भवं
विश्वासैकभुवं शिवं प्रति नमन् भूयासमन्तेष्वपि ॥ ४ ॥

इति श्रीमदुदयनाचार्यविरचितायां न्यायकुसुमाञ्जलिकारिकायां
द्वितीयः स्तबकः ।

# तृतीयः स्तबकः

अनुपलब्धेः ईश्वरबाधकत्वं निराकरोति—

योग्यादृष्टिः कुतोऽयोग्ये प्रतिबन्धिः कुतस्तराम् ।
क्वायोग्यं बाध्यते शृङ्गं क्वानुमानमनाश्रयम् ॥ १ ॥

अनुमानस्य ईश्वरस्य बाधकत्वं निराकरोति—

व्यावर्त्याभाववत्तैव भाविकी हि विशेष्यता ।
अभावविरहात्मत्वं वस्तुनः प्रतियोगिता ॥ २ ॥

योग्यानुपलब्धेरभावसाधनत्वं दर्शयति—

दुष्टोपलम्भसामग्री शशशृङ्गादियोग्यता ।
न तस्यां नोपलम्भोऽस्ति नास्ति सानुपलम्भने ॥ ३ ॥

ईश्वराभावसाधकमनुमानं निराकरोति—

इष्टसिद्धिः प्रसिद्धेंऽशे हेत्वसिद्धिरगोचरे ।
नान्या सामान्यतः सिद्धिर्जातावपि तथैव सा ॥ ४ ॥

शब्दप्रमाणस्य ईश्वरबाधकत्वं निराकरोति—

आगमादेः प्रमाणत्वे बाधनादनिषेधनम् ।
आभासत्वे तु सैव स्यादाश्रयासिद्धिरुद्धता ॥ ५ ॥

ईश्वरस्य संशयगोचरत्वं निराकरोति—

दृष्ट्यदृष्ट्योर्न सन्देहो भावाभावविनिश्चयात् ।
अदृष्टिबाधिते हेतौ प्रत्यक्षमपि दुर्लभम् ॥ ६ ॥

उपाधिशङ्काया अनुमानबाधकत्वं निराकरोति—

शङ्का चेदनुमाऽस्त्येव न चेच्छङ्का ततस्तराम् ।
व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मतः ॥ ७ ॥

उपमानस्य ईश्वरबाधकत्वनिराकरणाय वैशेषिकमतेन उपमानं निराकरोति—

परस्परविरोधे हि न प्रकारान्तरस्थितिः ।
नैकताऽपि विरुद्धानामुक्तिमात्रविरोधतः ॥ ८ ॥

साधर्म्यमिव वैधर्म्यं मानमेवं प्रसज्यते ।
अर्थापत्तिरसौ व्यक्तमिति चेत् प्रकृतं न किम् ॥ ९ ॥

न्यायमते उपमानस्य प्रमाणान्तरत्वं साधयति—

सम्बन्धस्य परिच्छेदः संज्ञायाः संज्ञिना सह ।
प्रत्यक्षादेरसाध्यत्वादुपमानफलं विदुः ॥ १० ॥

सादृश्यस्यानिमित्तत्वान्निमित्तस्याप्रतीतितः ।
समयो दुर्ग्रहः पूर्वं शब्देनानुमयापि वा ॥ ११ ॥

श्रुतान्वयादनाकाङ्क्षं न वाक्यं ह्यन्यदिच्छति ।
पदार्थान्वयवैधुर्यात्तदाक्षिप्तेन सङ्गतिः ॥ १२ ॥

वैशेषिकाभिमतं शब्दस्य अनुमाने अन्तर्भावं करोति—

अनैकान्तः परिच्छेदे सम्भवे च न निर्णयः ।
अकाङ्क्षा सत्तया हेतुर्योग्यासत्तिरबन्धना ॥ १३ ॥

प्रभाकराभिमतं लौकिकशब्दस्य अनुवादकत्वं निराकरोति—

निर्णीतशक्तेर्वाक्याद्धि प्रागेवार्थस्य निर्णये ।
व्याप्तिस्मृतिविलम्बेन लिङ्गस्यैवानुवादिता ॥ १४ ॥

व्यस्तपुन्दूषणाशङ्कैः स्मारितत्वात् पदैरमी ।
अन्विता इति निर्णीते वेदस्यापि न तत् कुतः ॥ १५ ॥

शब्दस्य ईश्वरबाधकत्वं निराकरोति—

न प्रमाणमनाप्तोक्तिर्नादृष्टे क्वचिदाप्तता ।
अदृश्यदृष्टौ सर्वज्ञो न च नित्यागमः क्षमः ॥ १६ ॥

न चासौ क्वचिदेकान्तः सत्त्वस्यापि प्रवेदनात् ।
निरञ्जनावबोधार्थो न च सन्नपि तत्परः ॥ १७ ॥

अर्थापत्तेः ईश्वरसाधकत्वं निराकरोति—

हेत्वभावे फलाभावात् प्रमाणेऽसति न प्रमा ।
तदभावात् प्रवृत्तिर्न कर्मवादेऽप्ययं विधिः ॥ १८ ॥

अर्थापत्तेः प्रमाणान्तरत्वं निराकरोति—

अनियम्यस्य नायुक्तिर्नानियन्तोपपादकः ।
न मानयोर्विरोधोऽस्ति प्रसिद्धे वाऽप्यसौ समः ॥ १९ ॥

अनुपलब्धेः प्रमाणान्तरत्वनिराकरणाय अभावग्रहे इन्द्रियाणां हेतुत्वं दर्शयति—

प्रतिपत्तेरपारोक्ष्यादिन्द्रियस्यानुपक्षयात् ।
अज्ञातकरणत्वाच्च भावावेशाच्च चेतसः ॥ २० ॥
प्रतियोगिनि सामर्थ्याद् व्यापाराव्यवधानतः ।
अक्षाश्रयत्वाद् दोषाणमिन्द्रियाणि विकल्पनात् ॥ २१ ॥
अवच्छेदग्रहध्रौव्यादध्रौव्ये सिद्धसाधनात् ।
प्राप्त्यन्तरेऽनवस्थानान्न चेदन्योऽपि दुर्घटः ॥ २२ ॥

स्तबकोपसंहारः—

प्रत्यक्षादिभिरेभिरेवमधरो दूरे विरोधोदयः
प्रायो यन्मुखवीक्षणैकविधुरैरात्मापि नासाद्यते ।
तं सर्वानुविधेयमेकमसमस्वच्छन्दलीलोत्सवं
देवानामपि देवमुद्धवदतिश्रद्धाः प्रपद्यामहे ॥ २३ ॥

इति श्रीमदुदयनाचार्यविरचितायां न्यायकुसुमाञ्जलिकारिकायां
तृतीयः स्तबकः ।

# चतुर्थः स्तबकः

ईश्वरज्ञानस्य अप्रमात्वसाधकः पूर्वपक्षः, तन्निराकरणं च—

अप्राप्तेरधिकप्राप्तेरलक्षणमपूर्वदृक् ।
यथार्थोऽनुभवो मानमनपेक्षतयेष्यते ॥ १ ॥

ज्ञाततामाश्रित्य अग्रहीतग्राहित्वस्य प्रमात्वसाधकः पूर्वपक्षः तन्निराकरणं च—

स्वभावनियमाभावादुपकारो हि दुर्घटः ।
सुघटत्वेऽपि सत्यर्थेऽसति का गतिरन्यथा ॥ २ ॥

मीमांसकाभिमतां ज्ञाततां प्रतिक्षिपति—

अनैकान्तादसिद्धेर्वा न च लिङ्गमिह क्रिया ।
तद्वैशिष्ट्यप्रकाशत्वान्नाध्यक्षानुभवोऽधिके ॥ ३ ॥

ज्ञाततां विनैव कर्मणां भेदसाधनम्—

अर्थेनैव विशेषो हि निराकारतया धियाम् ।
क्रिययैव विशेषो हि व्यवहारेषु कर्मणाम् ॥ ४ ॥

ईश्वरज्ञानस्य प्रमात्वं तत्प्रामाण्यसाधनं च—

मितिः सम्यक्परिच्छित्तिस्तद्वत्ता च प्रमातृता ।
तदयोगव्यवच्छेदः प्रामाण्यं गौतमे मते ॥ ५ ॥

स्तबकोपसंहारः—

साक्षात्कारिणि नित्ययोगिनि परद्वारानपेक्षस्थितौ
भूतार्थानुभवे निविष्टनिखिलप्रस्ताविवस्तुक्रमः ।
लेशादृष्टिनिमित्तदुष्टिविगमप्रभ्रष्टशङ्कातुषः
शङ्कोन्मेषकलङ्किभिः किमपरैस्तन्मे प्रमाणं शिवः ॥ ६ ॥

इति श्रीमदुदयनाचार्यविरचितायां न्यायकुसुमाञ्जलिकारिकायां
चतुर्थः स्तबकः ।

## पञ्चमः स्तबकः

ईश्वरसाधकं हेत्वष्टकं निर्दिशति—

कार्यायोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः ।
वाक्यात् सङ्ख्याविशेषाच्च साध्यो विश्वविदव्ययः ॥ १ ॥

कार्यत्वहेतौ पञ्चदोषान् निर्दिश्य निराकरोति—

न बाधोऽस्योपजीव्यत्वात् प्रतिबन्धो न दुर्बलैः ।
सिद्ध्यसिद्ध्योर्विरोधो न नासिद्धिरनिबन्धना ॥ २ ॥

ईश्वरबाधकं तर्कं निराकृत्य तत्साधकं तर्कं दर्शयति—

तर्काभासतयाऽन्येषां तर्काशुद्धिरदूषणम् ।
अनुकूलस्तु तर्कोऽत्र कार्यलोपो विभूषणम् ॥ ३ ॥

कार्यत्वहेतोः प्रयत्नजन्यत्वे अप्रयोजकत्वम् , इति पूर्वपक्षं निराकरोति—

स्वातन्त्र्ये जडताहानिः, नादृष्टं दृष्टघातकम् ।
हेत्वभावे फलाभावः विशेषस्तु विशेषवान् ॥ ४ ॥

धृत्यादीनां हेतूनां प्रयत्नजन्यत्वे मानं दर्शयति—

कार्यत्वान्निरुपाधित्वमेवं धृतिविनाशयोः ।
विच्छेदेन पदस्यापि प्रत्ययादेश्च पूर्ववत् ॥ ५ ॥

विधिप्रत्ययबलात् ईश्वरं साधयति—

प्रवृत्तिः कृतिरेवात्र सा चेच्छातो यतश्च सा ।
तज्ज्ञानं विषयस्तस्य विधिस्तज्ज्ञापकोऽथवा ॥ ६ ॥

विधिप्रत्ययार्थं दर्शयति—

इष्टहानेरनिष्टाप्तेरप्रवृत्तेर्विरोधतः ।
असत्त्वात् प्रत्ययत्यागात् कर्तृधर्मो न सङ्करात् ॥ ७ ॥

आख्यातार्थं दर्शयति—

कृताकृतविभागेन कर्तृरूपव्यवस्थया ।
यत्न एव कृतिः पूर्वा परस्मिन् सैव भावना ॥ ८ ॥

यत्नस्य आख्यातार्थत्वं दर्शयति—

भावेनैव हि यत्नात्मा सर्वाख्यातस्य गोचरः ।
तया विवरणध्रौव्यादाक्षेपानुपपत्तितः ॥ ९ ॥

कर्तरि आख्यातशक्तिं निवारयति—

आक्षेपलभ्ये संख्येये नाभिधानस्य कल्पना ।
संख्येयमात्रलाभे तु साकाङ्क्षेण व्यवस्थितिः ॥ १० ॥

कर्मनिष्ठस्य धर्मस्य विध्यर्थत्वं निवारयति—

अतिप्रसङ्गान्न फलं नापूर्वं तत्त्वहानितः ।
तदलाभान्न कार्यञ्च न क्रियाप्यप्रवृत्तितः ॥ ११ ॥

अविधायाः शाब्दभावनायाः विध्यर्थत्वं निवारयति—

असत्त्वादप्रवृत्तेश्च नाभिधापि गरीयसी ।
बाधकस्य समानत्वात् परिशेषोऽपि दुर्लभः ॥ १२ ॥

इष्टसाधनस्य विध्यर्थत्वं निवारयति—

हेतुत्वादनुमानाच्च मध्यमादौ वियोगतः ।
अन्यत्र क्लृप्तसामर्थ्यान्निषेधानुपपत्तितः ॥ १३ ॥

आप्ताभिप्रायस्य विध्यर्थत्वं दर्शयति—

विधिर्वक्तुरभिप्रायः प्रवृत्त्यादौ लिङादिभिः ।
अभिधेयोऽनुमेया तु कर्तुरिष्टाभ्युपायता ॥ १४ ॥
कृत्स्न एव च वेदोऽयं परमेश्वरगोचरः ।
स्वार्थद्वारैव तात्पर्यं तस्य स्वर्गादिवद् विधौ ॥ १५ ॥

व्याख्याविशेषादित्यस्य व्याख्यान्तरमाह—

स्याम भूवं भविष्यामीत्यादौ संख्या प्रवक्तृगा ।
समाख्याऽपि च शाखानां नाद्यप्रवचनादृते ॥ १६ ॥

स्तबकोपसंहारः—

इत्येवं श्रुतिनीतिसम्प्लवजलैर्भूयोभिराक्षालिते
येषां नास्पदमादधासि हृदये ते शैलसाराशयाः ।

किन्तु प्रस्तुतविप्रतीपविधयोऽप्युच्चैर्भवच्चिन्तकाः
काले कारुणिक ! त्वयैव कृपया ते तारणीया नराः ॥ १७॥

ग्रन्थोपसंहारः—

अस्माकन्तु निसर्गसुन्दर चिराच्चेतो निमग्नं त्वयी-
त्यद्धानन्दनिधौ तथापि तरलं नाद्यापि सन्तृप्यते ।
तन्नाथ ! त्वरितं विधेहि करुणां येन त्वदेकाग्रतां
याते चेतसि नाप्नुवाम शतशो याम्याः पुनर्यातनाः ॥१८॥

इत्येषनीतिकुसुमाञ्जलिरुज्ज्वलश्री-
यद्वासयेदपि च दक्षिणवामकौ द्वौ ।
नो वा ततः किममरेशगुरोर्गुरुस्तु
प्रीतोऽस्त्वनेन पदपीठसमर्पणेन ॥ १९ ॥

इति श्रीमदुदयनाचार्यविरचितायां न्यायकुसुमाञ्जलिकारिकायां
पञ्चमः स्तबकः ।



न्यायकुसुमाञ्जलिकारिका समाप्ता



## प्रथमः स्तबकः

**अदृष्टसाधनं ( का० १-४ )—**

अस्य न्यायकुसुमाञ्जलिग्रन्थस्य..........ईश्वरसिद्धिरेव मुख्यो विषयः जगत्कारणतया, प्राणिनां भोगजनकादृष्टनियामकतया, वेदप्रकाशकतया च तस्य सिद्धिर्भवति। तत्र वेदकारणतया ईश्वराङ्गीकारोऽपरिहार्यः इति सिद्धान्तं द्वितीयस्तबके विस्पष्टेष्यति ग्रन्थकारः। अत्र प्रथमस्तबकारम्भे तु जगत्कारणतया अदृष्टाधिष्ठातृतया चेश्वरं साधयितुं प्रयतते। तत्र पूर्वमदृष्टसिद्धिः कार्याः तदनन्तरमेव तदधिष्ठातृतया ईश्वरसिद्धिः सम्भवति। अतो ग्रन्थारम्भे 'सापेक्षत्वादनादित्वाद्' इति कारिकायामदृष्टसाधनाय १. 'सापेक्षत्वाद्' २. 'अनादत्विाद्' ३. 'वैचित्र्याद्' ४. विश्ववृत्तितः ५. 'प्रत्यात्मनियमाद् भुक्तेः' इति हेतुपञ्चकसुपन्यस्तं तत्र—'सापेक्षत्वाद्' इति प्रथमो हेतुः, स च कारणसामान्यसाधनाय उपात्तः। चार्वाकादयो हि कार्यकारणभावमेव क्वचिदपि न स्वीकुर्वन्ति। तन्मतस्य निवारणाय कारणसामान्यसाधनमावश्यकम्। अतस्तत्साधनाय सापेक्षत्वाद् कादाचित्कत्वाद् इति प्रथमो हेतुरुपन्यस्तः। तथा चानुमानम्—कार्यं सहेतुकं कादाचित्कत्वाद् भोजनजन्यतृप्तिवत्।

एवं सापेक्षत्वेन हेतुना कारणसामान्ये साधिते चार्वाकः पुनः प्रत्यवतिष्ठते यत् घटादीनां कारणं किं नित्यमनित्यं वा ? नित्यं चेत् कारणं तदा घटादेरपि नित्यत्वप्रसङ्गः अतो न कारणं नित्यं सम्भवति। अनित्यञ्चेत् कारणं तदा तस्याप्युत्पत्तिरवाच्या, एवं तत्कारणपरम्पराऽपि कादाचित्कत्वादुत्पन्ना वाच्या, तथा च—अनवस्थादोषप्रसङ्गः। अतः कार्यकारणसिद्धान्तोऽसमीचीनः इति पूर्वपक्षस्य निवारणार्थम् 'अनादित्वाद्' इति द्वितीयो हेतुरुक्तः। बीजाङ्कुरवत् प्रामाणिकीयमनवस्था न दोषाय इत्यभिप्रायः।

एवं पूर्वपक्षे निवारिते चार्वाकः पुनरपि शङ्कते यत् सांख्याभिमता प्रकृतिरेव कारणमस्तु किं वा वेदान्ताभिमतं ब्रह्म कारणं भवतु, अतोऽपि व्यर्था अदृष्टकल्पना इति पूर्वपक्षस्य समाधानार्थं 'वैचित्र्याद्' इति तृतीयो हेतुः 'कार्यं विचित्रकारणवत् विचित्रकार्यत्वाद्' इत्यनुमाने पर्यवस्यति तथा च नैका प्रकृतिः न चैकं ब्रह्म कारणं भवितुमर्हति अतोऽदृष्टमेव कारणं स्वीकार्यम्।

तत्र चार्वाकः पुनरपि शङ्कते यत् दृष्टं यागादिकमेव कारणमस्तु किमदृष्टकल्पनया प्रयोजनमिति शङ्कानिवारणार्थं 'विश्ववृत्तितः' इति चतुर्थो हेतुरुक्तः। विश्वेषां परलोकार्थिनां यागादौ वृत्तितः प्रवृत्तितः इत्यर्थः। यागादिकं क्षणिकं कर्म न कालान्तरे तत् कालावस्थायि

व्यापारं विना स्वर्गादिजनने समर्थम् अतः चिरध्वस्तस्य यागादिकर्मणोऽवान्तरव्यापार-तया अदृष्टसिद्धिरित्यभिप्रायः ।

अत्र चार्वाकः पुनरपि शङ्कते—भवत्वदृष्टमेव कारणं किन्तु तद्भोग्यनिष्ठमेव नात्मनिष्ठ-मिति शङ्कानिवारणाय 'प्रत्यात्मनियमाद्भुक्ते'रिति पञ्चमो हेतुरुक्तः । भुक्तेर्भोगस्य प्रति-नियतात्मवृत्तित्वादित्यर्थः । एकस्मादेव पदार्थात् प्राणिनां भिन्नो भोगो दृश्यते यदि तु भोग्यनिष्ठमेवादृष्टं स्याद् आत्मनिष्ठं च न भवेत् तदा एकस्मात् पदार्थाद् विभिन्नो भोगो न सम्भवेद् आत्मनि तु अदृष्टे स्वीक्रियमाणे अदृष्टभेदात् विभिन्नो भोग उपपद्यते अत आत्मनिष्ठमेवादृष्टं स्वीकार्यमेवम् अदृष्टसिद्धिः ततस्तदधिष्ठातृतया ईश्वरसिद्धिरिति ग्रन्थ-कर्तुरभिप्रायः । एवं हेतुपञ्चकेन अदृष्टकारणस्य सिद्धिरुक्ता—एतेषामेव हेतूनां विस्तरार्थ-मग्रे कारिकापञ्चकं रचितं ग्रन्थकृता । ( का० १-४ )

**कार्यकारणभावे व्यतिरेकव्यभिचारदोषवारणाय प्रयतते ( का० ५-६ )—**

पूर्वं चतुर्थकारिकायां 'सापेक्षत्वाद्' 'अनादित्वाद्' इति हेतुद्वयेन—कारणसामान्यं साधितम्, अत्र चार्वाकः पुनरपि शङ्कते यदि कार्यकारणभावः कल्प्यते तदा वह्निस्तृणादि-जन्यत्वाद् तृणारणिमणिनामेव तत्रकारणतावाच्या सा च व्यतिरेकव्यभिचारान्न सम्भवति । तृणसत्त्वे वह्निसत्ता इत्यन्वयस्तूपपद्यते किन्तु तृणाभावे—वह्न्यभावः इति व्यतिरेको, अरण्यादि हेत्वन्तरजन्यस्य वह्नेर्विद्यमानत्वान्न घटते । एवम् अरणि सत्त्वे वह्निसत्ता इत्यन्वये उपपद्यमानेऽपि अरण्यभावे वह्न्यभावः इति व्यतिरेको मण्यादिजन्यस्य वह्नेः सत्त्वान्न-घटते । एवं च मणिसत्त्वे वह्निसत्ता इत्यन्वये उपपद्यमानेऽपि मण्यभावे तृणादिजन्यस्य वह्न्यन्तरस्य सदभावाद् 'मण्यभावे वह्न्यभावः' इति व्यतिरेको न प्रसरति ।

कारणत्वग्रहो हि अन्वयव्यतिरेकाभ्यामुभाभ्यामेव सम्भवति नान्वयमात्रात् न वा व्यतिरेकमात्रात् केवलात् । अत्र च तृणादीनां वह्निकारणानामन्वयमात्रं दृश्यते न व्यति-रेकः । अतो व्यतिरेकव्यभिचारितया तृणादौ क्वचिदपि वह्निकारणत्वं न सम्भवति । अतः कार्यकारणसिद्धान्तः न समीचीनः इति चार्वाकस्य पूर्वपक्षः ।

अस्य चार्वाकोक्तस्य व्यतिरेकव्यभिचारदोषस्य वारणाय मीमांसकैर्नैयायिकैश्च प्रयति-तम् । किन्तु उभयोरपि भिन्नः पन्थाः पूर्वं मीमांसकैः तृणारणिमणिषु वह्न्यनुकूलैकशक्ति-मत्त्वेन कारणतां प्रकल्प्य व्यतिरेकव्यभिचारो वारितः तथा हि तृणारणिमणिषु न तृणत्वेन अर्णित्वेन मणित्वेन वा कारणता अपितु सर्वेष्वपि कारणेषु वह्न्यनुकूलैकशक्तिमत्त्वेन कारणता । तथा च वह्न्यनुकूलैकशक्तिमत्त्वे सति वह्निसत्ता वह्न्यनुकूलैकशक्तिमत्त्वा-भावे सति वह्न्यभावः इत्यन्वयव्यतिरेकयोरुभयोरपि सम्भवान्न व्यतिरेकव्यभिचारसम्भवः । अतः कार्यकारणभावोऽपि स्वीकार्य एव इति मीमांसकानामभिप्रायः ।

किन्तु नैयायिकास्तु शक्तिवादं न स्वीकुर्वन्ति तेषां मते शक्तिस्वीकारपक्षे १. धूमा-दिना वह्न्यनुमानं न स्यात्, २. प्रतिनियमो न स्यात्, ३. गौरवं च स्यात् इति त्रयो दोषाः

प्रसज्यन्ते। तत्र धूमादिना वह्न्यनुमानं न स्यात् इति प्रथमदोषस्यायमभिप्रायः। अनुमाने व्याप्तिग्रह आवश्यकः स च धूमसामान्यवह्निसामान्ययोः कार्यकारणभावेनैव सम्भवति। किन्तु शक्तिस्वीकारे न वह्निसामान्यस्य धूमसामान्यं प्रति हेतुता अतो वह्नित्वं न कारणतावच्छेदकं किन्तु धूमानुकूलैकशक्तिमत्त्वमेव कारणतावच्छेदकं अतो धूमादिना धूमानुकूलैकशक्तिमत्त्वावच्छिन्नस्यानुमानं, न वह्नित्वावच्छिन्नस्य। अनुमानेनागृह्यमाणो हि वह्नित्वावच्छिन्नो वह्निः। अतो—'धूमादिना वह्न्यनुमानं न स्यात्' इति शक्तिस्वीकारपक्षे प्रथमो दोषः।

'प्रतिनियमो न स्यात्' इति द्वितीयो दोषः प्रतिनियमो व्यवस्था। तृणारणिमणिषु वह्निकारणेषु व्यवस्था दृश्यते तृणारणिमणिसम्बद्धं फूत्कार-मन्थन-प्रतिफलितरविकिरण-संयोगरूपमपरमपि कारणत्रयमत्रोपलभ्यते। तत्र तृणफूत्कारसमवधाने, अरणिमन्थनयोः समवधाने, मणिप्रतिफलितरविकिरणयोश्च समवधान एव वह्निरूपं कार्यं जन्यते इति प्रतिनियमो दृष्यते। स च शक्तिस्वीकारपक्षे षट्स्वपि सर्वेषु कारणेषु वह्न्यनुकूलैकशक्तिमत्त्वस्य कारणतावच्छेदकत्वाद् वह्नित्वस्य च तत्राहेतुत्वाभावान्न घटते। ततश्च कयोरपि द्वयोः कारणयोः समवधाने वह्न्युत्पत्तिसम्भवात् पूर्वोक्तव्यवस्थाभङ्गः सञ्जायते। अतः शक्तिः कारणतावच्छेदिका न स्वीकार्या इति 'प्रतिनियमो न स्यात्' इत्यस्य द्वितीयदोषस्याभिप्रायः।

शक्तिस्वीकारपक्षे 'गौरवं च स्यात्' इति तृतीयो दोषः 'नित्ये नित्यैव सा शक्तिरनित्ये भावहेतुजा' इति मीमांसकसिद्धान्तादनित्योऽपि शक्तिभेदः स्वीक्रियते। ततश्च तदुत्पत्तेः पूर्वं तस्य प्रागभावः ध्वंसानन्तरञ्च प्रध्वंसाभावः अनन्तशक्तिकल्पनापत्तिश्चेति पदार्थजातं कल्प्यं भवति ततश्च गौरवं भवति। अतः शक्तिपक्षः सर्वथा हेय एव इति नैयायिकस्याभिप्रायः।

एवं शक्तिमुखेन व्यतिरेकव्यभिचारवारणं खण्डितम् अतस्तद्वारणस्य भारो नैयायिके आपतति। तेन च कार्येषु वैजात्यं प्रकल्प्य सा निवारितः। तस्यायमभिप्रायः यत् तृणजन्यो तृणजन्यस्तारणो वह्निः वह्न्यन्तरात् भिन्नः एवम्—अरणिजन्यो वह्निरपि भिन्नः मणिजन्योऽपि वह्निः वह्न्यन्तराभ्यां भिन्नः। अतस्तृणस्य तारणवह्निं प्रत्येव कारणता न वह्न्यन्तरं प्रति एवम् अरणिजन्यवह्निविशेषं प्रत्येव अरणिकारणता, मणिजन्यवह्निविशेषं प्रति च मणेरेव कारणता न वह्न्यन्तरं प्रति। ततश्च तृणसत्त्वे तारणवह्निसत्तातृणाभावे तारणवह्न्यभाव इत्यन्वयव्यतिरेकौ उभावप्युत्पन्नौ एवम् अरणिजन्यमणिजन्यवह्निस्थलेऽपि अन्वयव्यतिरेकौ सम्भवतः। अतो न व्यतिरेकव्यभिचारदोषः। इति सर्वमभिप्रेत्य षष्ठकारिकायामुक्तं 'प्रवाहो नादिमानेष न—विजात्येष शक्तिमान्' एष कार्यकारणप्रवाहोऽनादिः—विजातीयेषु तृणारणिमणिषु एकशक्तिमान् न कार्यकारणभावः।

यश्च व्यभिचारदोषश्चार्वाकेण प्रोक्तः तत् परिहाराय—'तत्त्वे यत्नवता भाव्यमन्वयव्यतिरेकयोः'[1] अन्वयव्यतिरेकयोः तत्त्वे नियततत्त्वे निर्वाह्ये यत्नता भाव्यं यत्नः करणीयः—कार्येषु तारणवह्न्यादिषु वैजात्यं कल्पनीयमित्यर्थः कार्येषु वैजात्ये च कल्पिते

सति व्यतिरेकव्यभिचारदोषवारणं सुतरां सम्भवतीति ग्रन्थकर्तुरभिप्रायः। ( का० १-६ )

**'शक्तिखण्डनम्' ( का० १-१० )—**

शक्तिसिद्धान्तो हि मीमांसकानां प्रमुखः सिद्धान्तः तन्निवारणाय अत्र ग्रन्थकृता बहु प्रयतितम् पूर्वं षष्ठकारिकामपि शक्तिसिद्धान्तः प्रत्याख्यातः किन्तु स्थूणानिखननन्यायेन पुनरपि शक्तिसिद्धान्तं निराकरोति। वैशेषिकादयो द्रव्यादिपदार्थसप्तकमङ्गीकुर्वन्ति। मीमांसकैस्तु तद् व्यतिरिक्ता शक्ति सादृश्यं च पदार्थान्तरमपि स्वीक्रियते। तत्र शक्तिसाधनाय तेषामियं वाचोयुक्तिः। सामान्यतो वह्निर्दाहजनको भवति किन्तु यदा मणिमन्त्रौषधीनां प्रयोगस्तत्र क्रियते तदा प्रज्वलिते वह्निस्वरूपे विद्यमानेऽपि दाहो न जन्यते अत्र दाहनियामिका शक्तिरेव भवति। मणिमन्त्रादिप्रयोगात् पूर्वं वन्हौ दाह-शक्तिर्भवति। मणिमन्त्रप्रयोगे तु सा शक्तिर्विनश्यति इति तादृशादेव करतलानलसंयो-गादेकदा दाहो भवति अन्यदा च न भवति इत्यत्र शक्तिरेव नियामिका।

नैयायिकास्तु प्रतिबन्धकसंसर्गाभावं कार्यमात्रे हेतु मन्यन्ते। तथा च मणि-मन्त्रादिप्रयोगे प्रतिबन्धकसंसर्गाभावरूपसामग्रीविरहात् दाहो न भवति इति शक्तिं विनापि दाहजनकत्वोपपत्तेः शक्तिस्वीकारो व्यर्थ एव। किञ्च तत्र गौरवमपि स्यात्। अनित्यशक्तिपक्षे शक्तेः प्रागभावकल्पना प्रध्वंसाभावकल्पना अनन्तशक्तिकल्पना चेति गौरवभयात् शक्तिसिद्धान्तोऽव्यवहारिकः इति नैयायिकानाम् अभिप्रायः।

अत्र मीमांसकाः प्रत्यवतिष्ठन्ते यत् कारणत्वं भावत्वव्याप्यं भाव एव कारणं भवितुमर्हति नाभाव इत्यर्थः। अतः प्रतिबन्धकसंसर्गाभावस्य न कारणत्वम्। किन्तु शक्तिभेद एव तत्र नियामकः।

शक्त्यनभ्युपगमे अकिंचित्करस्य मण्यादेः प्रतिबन्धकपदप्रयोगानुपपत्तिः। इत्येकं दूषणम्। उत्तेजकाभावकूटविशिष्टप्रतिबन्धकसंसर्गाभावस्य कारणत्वे गौरवापत्तिः इति द्वितीयो दोषः। भावस्यैव कारणत्वम् इति नियमोल्लंघनं तृतीयो दोषः। एवं दोषत्रय-भयात् प्रतिबन्धकसंसर्गाभावस्य न कारणत्वम् अतः शक्तिरवश्यस्वीकार्या इति मीमांस-कानां सिद्धान्तः।

अस्य सिद्धान्तस्य निराकरणाय भावो यथा तथाभावः कारणम् इत्यादिकारि-कायाः आरम्भः। यथा भावः अभावश्चोभयमपि कार्यं भवति एवम् उभयत्र कारणत्वमपि अविरुद्धम् इत्युक्तमभावो यथा तथा भावः कारणं कार्यवन्मतम्।

यच्चोक्तम् अकिंचित्करे मण्यादौ प्रतिबन्धकपदप्रयोगानुपपत्तिरिति तत्समाधत्ते प्रति-बन्धोपि सामग्री 'तद्धेतुः प्रतिबन्धकः' न्यायमते मण्यादौ न प्रतिबन्धकपदप्रयोगः किन्तु तदसमवधानहेतुभूते पुरुषे एव प्रतिबन्धकपदप्रयोगः। मण्यादिप्रतिबन्धशब्देनोच्यते। यदि वा प्रतिबन्धशब्दात् स्वार्थे 'क' प्रत्यये कृते तत्र प्रतिबन्धकपदप्रयोगोऽपि न विरुद्ध्यते।

शक्तिवादे च नित्यशक्तिपक्षः अनित्यशक्तिपक्षश्चेति द्वौ पक्षौ उभयत्रापि शक्तेः । उत्पत्ति-विनाशयोः कुण्ठितत्वतद्विनाशयोश्चाभ्युपगमात् गौरवमप्यपरिहार्यम् । अतः शक्तिसिद्धान्तो न समीचीनः इति नैयायिकानामभिप्रायः । ( का० १-१० )

**संस्कारस्य भोग्यनिष्ठत्वनिराकरणम् ( का० १-११ )—**

अत्र पूर्वपक्षी संस्कारस्य भोग्यनिष्ठत्वं साधयितुं निम्नाङ्कितं युक्तिषट्कमुपन्यस्यति—

१. व्रीहीन् प्रोक्षति व्रीहीन् वहन्ति, इत्यत्र प्रोक्षिता एव व्रीहयोऽविघाताय गृह्यन्ते इति प्रोक्षितेषु व्रीहिषु अप्रोक्षितेभ्यो व्रीहिभ्यः भेदसाधकः संस्कारो व्रीहिनिष्ठः कल्प्यते ।

२. किञ्च यो यद्गतफलार्थितया क्रियते स तन्निष्ठफलजनकव्यापारजनक इति नियमात् व्रीहिनिष्ठावघातरूपफलजनकतया क्रियमाणं प्रोक्षणं व्रीहिनिष्ठसंस्कारजनकमिति भोगनिष्ठः संस्कारः ।

३. व्रीहीन् प्रोक्षति इत्यत्र व्रीहिपदस्य कर्मतया तत्रैव संस्कारसिद्धिः 'परसमवेत-क्रियाजन्यफलाश्रयत्वं कर्मत्वम्' इति कर्मलक्षणम् । अत्र च प्रोक्षणरूपा क्रिया परसमवेता क्रिया तज्जन्यञ्च फलं संस्कारः तदाश्रयतयैव व्रीहिपदस्य कर्मत्वमिति व्रीहिनिष्ठ एव संस्कारः नात्मनिष्ठः ।

४. संस्कृतो व्रीहि इति प्रत्ययबलादपि संस्कारस्य व्रीहिनिष्ठत्वं कल्प्यते ।

५. माघकर्षणादिना भूमिनिष्ठाशक्तिर्जन्यते न तु कृषके, भैषजपानस्थले च आकुले संस्कारः, न तु वैद्ये इति सर्वत्र संस्कारस्य भोग्यनिष्ठत्वम् अत एव भोग्यनिष्ठ एव संस्कारः स्वीकार्यः नात्मनिष्ठः ।

६. व्रीह्यादीनाम् आपरमाणुभङ्ग प्रलयानन्तरं पुनर्व्रीह्यादि उत्पत्त्यर्थं परमाणुषु व्रीहियवादिसंस्काररूपेण भेदोऽङ्गिकार्यः अन्यथा सदृशैः परमाणुभिः विजातीयानाम् व्रीहियवादीनाम् उत्पत्तिर्नावकल्प्येत् इति पूर्वपक्षः ।

अत्रोत्तरम्—

१. "संस्कारः पुंस एव इष्टः प्रोक्षणाभ्युक्षणादिभिः" अयं भावः प्रोक्षणादिभिः पुंसि एव संस्कार इष्टः मन्तव्यः स्वीकर्तव्यः प्रतिव्रीहिनानासंस्कारकल्पनापेक्षया पुरुषनिष्ठस्य एकस्यैव संस्कारस्य कल्पने लाघवात् ।

२. यो यद्गतफलार्थितया क्रियते स तन्निष्ठफलजनकव्यापारजनक इति तु शत्रुनिष्ठ-वधादिरूपफलजनकतया क्रियमाणे स्वनिष्ठफलजनके च श्येनादौ व्यभिचारी ।

३. यत्तु व्रीहीन् प्रोक्षति इत्यत्र कर्मत्वबलात् व्रीहिनिष्ठसंस्कारस्य कल्पनं तदप्यसंगतम् अत्र प्रोक्षणरूपा क्रिया परसमवेता क्रिया तज्जन्यञ्च फलं न संस्काररूपं किन्तु जलसंयोग-रूपं तदाश्रयतयैव व्रीहीणां कर्मत्वं यथा सक्तून् प्रोक्षति इत्यस्मिन् लौकिके प्रयोगे संस्कारा-भावेऽपि प्रोक्षणरूपाया परसमवेतक्रियाया जलसंयोगरूपं फलम् आश्रित्यैव सक्तून् इत्यत्र कर्मत्वम् ।

४. संस्कृतो व्रीहि इत्यत्र स्वरूपसम्बन्धेनैव संस्कारस्य व्रीहिनिष्ठत्वम् समवाय-सम्बन्धेन तु आत्मनिष्ठत्वमेव संस्कारस्य स्वरूपसम्बन्धश्च वृत्त्यनियामकः सम्बन्धः ।

५. कृषिस्थले भैषजपानस्थले च भूमिमार्दवं धातुसाम्यं च दृष्टमेव द्वारं फलजनकमिति न तत्र अदृष्टकल्पना दृष्टद्वाराभावे एव अदृष्टकल्पनायाः न्याय्यत्वात् ।

६. व्रीहियवादिनियमार्थं परमाणुषु पाकजादयः स्वगुणा एव 'विशेषकाः' भेदका इत्यर्थः । एवं संस्कारस्य भोग्यनिष्ठत्वं साधयितुं यत् युक्तिषट्कं पूर्वपक्षिणा उपन्यस्तम् तत्सर्वमपि निरस्तम् । ( का० १-११ )

**पुनरपि संस्कारस्य भोग्यनिष्ठत्वं निराकरोति ( का० १-१२ )—**

संस्कारस्य भोग्यनिष्ठत्वसाधनाय अस्यां कारिकायाम् अपि पूर्वपक्षिणा पुनर्हेतुद्वयमुपन्यस्तम् यत्र जलादौ न पाकजरूपादयः, तत्र यौ उद्भवानुद्भवौ करकादौ च दृश्येते तदर्थं परमाणुषु द्रवत्वस्य जले संस्कारः स्वीकार्यः इति पूर्वपक्षस्य आशयः तन्निराकरणाय निमित्तभेदसंस्कारसंसर्गाद् उद्भवानुद्भवादयः इति कारिकायामुक्तम् निमित्तभेदः अदृष्टविशेषः अदृष्टवत् आत्मविशेषसम्बन्ध इत्यर्थः येनार्थेन यस्योपभोगो भवति तस्यादृष्टमपि तत्र कारणं भवति अत एव अदृष्टवत् आत्मविशेषसम्बन्धादेव क्वचित् जलादौ द्रवत्वस्य उद्भवः क्वचिच्च करकादौ द्रवत्वानुद्भव इति न भोग्यनिष्ठः संस्कारः किन्तु आत्मनिष्ठ एव संस्कारः द्रवत्वस्य उद्भवानुद्भवे हेतुः ।

प्रतिष्ठाविधिना प्रतिमादौ संस्काराधानात् **प्रतिमा पूज्यतां याति** इत्युदाहरणबलात् पूर्वपक्षिणा संस्कारस्य भोग्यनिष्ठत्वं साधयितुं द्वितीया युक्तिः प्रस्तुता तन्निराकरणाय 'देवतासन्निधानेन प्रत्यभिज्ञानतोऽपि वा' इत्यादि कारिकायामुक्तं देवता-देवप्रतिमा इत्यर्थः, प्रतिष्ठाविधिना न देवप्रतिमादौ संस्कारः कश्चित् अपि तु तदधिष्ठातृदेवतायां प्रतिमाविषयकः अहङ्कारो ममकारो वा जन्यते, 'सन्निधानेन' इत्यस्य अहङ्कार इत्यर्थः 'प्रत्यभिज्ञानतोऽपि वा इत्यनेन च ममकारो ग्राह्यः प्रतिष्ठाविधिना देवतायाम् अहङ्कारममकारौ जन्येते तावेव पूज्यतां नियामकौ न तु प्रतिमानिष्ठः कश्चित् संस्कारः । देवताचैतन्यविवादे च चाण्डालादिस्पर्शाभावविशिष्टयथार्थपूजितत्वधीप्रतिष्ठितत्वबुद्धिश्च पूज्यता नियामिका । ( का० १-१२ )

**संस्कारस्य भोग्यनिष्ठत्वं पुनरपि निराकरोति ( का० १-१३ )—**

संस्कारस्य भोग्यनिष्ठत्वसाधनायैव पूर्वपक्षिणा तुलापरीक्षाया निदर्शनं प्रस्तुतं परीक्षाविधिना तुलायां कश्चित् संस्कारो जन्यते तेन च तुलायाः नमनोन्नमनं भवति अतो भोग्यनिष्ठ एव संस्कारोभ्युपगन्तव्य इति पूर्वपक्षस्याशयः । सिद्धान्तपक्षे च परीक्षाविधिना तुलादौ कश्चिदपि संस्कारो न जन्यते अपि तु परीक्ष्यसमवेतस्य जयनिमित्तस्य धर्मस्य पराजयनिमित्तस्य वा अधर्मस्य 'वृत्तिलाभाय' सहकारिलाभाय परीक्षाविधयो मताः सहकारि च अहं पापवान् निष्पापो वा इति ज्ञानम् । यत्र तु निष्पापः पुरुषः परीक्षायां नियुज्यते तत्र मुख्यकारणस्य धर्मस्याभावे सहकारिज्ञानेन किमपि प्रयोजनं न सिद्ध्यति पक्षान्तरे 'वृत्तिलाभाय' इत्यस्य 'जननाय' इत्यर्थोऽङ्गीक्रियते प्रतिज्ञानुरूपां शुद्धिमपेक्ष्य परीक्षाविधिना तत्र धर्मजननात् इत्यर्थः । ( का० १-१३ )

### साङ्ख्यमतनिराकरणम् ( का० १-१४ )—

अस्यां कारिकायां साङ्ख्यमतं निराकरोति कारिकाकृतसाङ्ख्यसिद्धान्ते कृति-भोगादयो धर्माः बुद्धिनिष्ठाः सा च अचेतना, पुरुषश्च चेतनः, कर्तृत्वभोक्तृत्वादिधर्मरहिताः किन्तु कृतिचैतन्ययोः वैयधिकरण्यप्रतिपादकः साङ्ख्यसिद्धान्तोऽयं न समीचीनः इति कारिकायां प्रदर्शितम्। न्यायसिद्धान्ते इच्छा-प्रयत्न-भोग-चैतन्यरूपाश्चत्वारोऽपि धर्माः समानाधिकरणा आत्मनिष्ठाः भवन्ति इति कारिकायाः पूर्वार्द्धभागे—

'कर्तृधर्मानियन्तारश्चेतिता च स एव नः'।

इत्यनेन प्रदर्शितम्। कर्तृधर्माः = कृतिसमानाधिकरणाः इच्छादयः धर्माः नियन्तारः भोगस्य नियामकाः। यः इच्छति स एव यतते स एव युङ्क्ते स एव च चेतनः, इति भावार्थः। अन्यथा साङ्ख्याभिमते कृतिचैतन्ययोर्वैयधिकरण्ये अनपवर्गः स्यात् इत्येकं दूषणम्। अथवा असंसारः इत्यपरं दूषणम्। साङ्ख्यमते कृतिभोगादयो धर्माः बुद्धिनिष्ठाः बुद्धिपुरुषसम्बन्धो पुरुषे आरोपितसद्भावे सति भवन्ति। सा चेत् बुद्धिर्नित्या बुद्धिपुरुषयोरुभयोरपि नित्यत्वात् तयोर्नित्यः सम्बन्धः सम्बन्धस्य नित्यत्वाच्च नित्यो भोग इति अनपवर्गः प्रसक्तः बुद्धिश्चानित्या चेत् तर्हि सा उत्पन्ना वाच्या उत्पत्तेश्च पूर्वं तस्या अभावो वक्तव्यः बुद्ध्यभावे च न तन्निष्ठा अदृष्टादयो धर्मा स्युः अदृष्टाभावे च कथं संसारः इति बुद्धि-नित्यत्वपक्षे अनपवर्गः स्यात् बुद्ध्यनित्यत्वपक्षे च असंसारः स्यात् इत्युभयतः पाशा-रज्जूः तस्मात् कृतिचैतन्ययोर्वैयधिकरण्यप्रतिपादकः साङ्ख्यसिद्धान्तोऽयं न समीचीन इति ग्रन्थकारस्य अभिप्रायः। ( का० १-१४ )

### चार्वाकस्य शरीरचैतन्यवादं निराकरोति ( का० १-१५ )—

पूर्वकारिकासु अदृष्टं न भोग्यनिष्ठं किन्तु आत्मनिष्ठमेव इति बह्वीभिर्युक्तिभिः साधितम् तदङ्गीकृत्य चार्वाकः पुनरप्याह भवतु चैतन्येऽदृष्टं किन्तु चेतनो न नित्यविभुः अपि तु शरीरमेव चेतनं तदेव च अदृष्टाधिकरणम् इति अस्य सिद्धान्तस्य निराकरणायेयं कारिका प्रारभ्यते, शरीरस्य चैतन्ये बाल्यदृष्टस्य यौवने स्मरणं न स्यात् बालयौवनशरीरयोर्भेदात् इति कारिकाया प्रथमचरणे 'न्यायदृष्टं स्मरत्यन्यः' इत्यादिना उक्तं यथा चैत्रेण दृष्टं अर्थं मैत्रो न स्मरति उभयोः भिन्नत्वात्। एवं बालशरीरेण दृष्टं यौवनशरीरं न स्मरति उभयोर्भिन्नत्वात्।

अत्र चार्वाकः पुनः 'सोऽयं देवदत्तः' इति प्रत्यभिज्ञाबलेन बाल्ययौवनशरीरयोरेकत्वं प्रतिपादयति। तन्निराकरणाय कारिकायाः द्वितीयचरणे 'नैकंभूतमपक्रमात्' इत्युक्तम् भूतं बाल्ययौवनयोर्भौतिकं शरीरमित्यर्थः अपक्रमात् पूर्वशरीरविनाशात्, परिमाणभेदेन बाल्ययौवनयोः शरीरभेदादित्यर्थः। परिमाणनाशस्य आश्रयनाशजन्यत्वात् बाल्यशरीर-परिमाणनाशेन तदाश्रयस्य बाल्यशरीरस्यैव नाशाभ्युपगमात्।

अत्र चार्वाकः पुनः कारणेन अनुभूतस्य कार्येण स्मरणमुपपन्नमिति शंक्यते। तन्निराकरणाय कारिकायास्तृतीयश्चरणः, 'वासनासंक्रमो नास्ति' न हि कारणस्य वासना

कार्ये समायाति अन्यथा मात्रानुभूतस्य गर्भस्थेन स्मरणं स्यात् इति बाल्यशरीरस्य यौवनशरीरे वासना संक्रमो न सम्भवतीति अतो बाल्ये दृष्टस्य यौवने स्मरणं न सम्भवति। अत्र पुनश्चार्वाकः उपादानवासनाया उपादेयसंक्रमम् अभ्युपेत्य बाल्यदृष्टस्य यौवने स्मरणम् उपपादयति तन्निराकरणाय 'न च गत्यन्तरं स्थिरे' इति कारिकाया-श्चतुर्थश्चरणः स्थिरे स्थिरपक्षे पुञ्जात्पुञ्जान्तरोत्पत्तेरभावात् करचरणादयः अवयवा एव शरीरस्य उपादान भूता वक्तव्याः, ततश्च विच्छिन्ने करादौ तदनुभूतस्य खण्डितशरीरे स्मरणं नोपपद्येत् विच्छिन्नकरादेः खण्डितशरीरे अनुपादानत्वात् तस्मात् शरीरस्य चैतन्यवादे बाल्यदृष्टस्य यौवने स्मरणं बाल्ये कृतस्य यौवने भोगश्च नोपपद्येत् इति चार्वाकाभिमतो शरीरचैतन्यवादोऽनुपपन्नः। ( का० १-१५ )

## 'बौद्धाभिमतस्य क्षणभङ्गवादस्य निराकरणम्' ( का० १-१६ )—

अस्यां कारिकायां बौद्धाभिमतः क्षणभङ्गवादो निराकृतः क्षणभङ्गवादस्य निराकरणात् पूर्वं तदनुवादः कार्यः। तथाहि बौद्धा सत्त्वं हेतुत्वेनाश्रित्य 'सर्वं क्षणिकं सत्त्वात् जलधर-पटलवत्' इत्यनुमानेन क्षणिकत्वं साधयन्ति तत्र 'सत्तासामान्ययोगित्वं सत्त्वमिति' न्यायमते सत्त्वस्य लक्षणं, तच्च बौद्धैर्नाभ्युपगम्यते सत्तासामान्यस्यैव तैरनङ्गीकारात् नैयायिकानां सत्तासामान्यं नित्यं तत्त्वं बौद्धास्तु क्षणभङ्गवादिना इति नित्यं सत्ता-सामान्यं न मन्यन्ते अतः 'सत्तासामान्यं योगित्वं सत्त्वम्' इति सत्त्वलक्षणं निराकृत्य 'अर्थक्रियाकारित्वं सत्त्वमिति' सत्तासामान्यलक्षणं वदन्ति तच्च अर्थक्रियाकारित्वं क्रमयौगपद्याभ्यां व्याप्तं यत्र यत्र अर्थक्रियाकारित्वं तत्र तत्र क्रमः यौगपद्यं वा इति क्रम-यौगपद्ये व्यापके अर्थक्रियाकारित्वं च व्याप्यं 'व्यापकनिवृत्तौ व्याप्यस्यापि निवृत्तिरिति' नियमानुरोधात् स्थिरात् घटात् व्यावर्त्यमाने क्रमयौगपद्ये व्याप्यम् अर्थक्रियाकारित्वमपि व्यावर्तयतः। यदि तु स्थिरे घटे क्रमशः अर्थक्रियाकारित्वं स्वीक्रियते तर्हि एकस्मिन् क्षणे एकस्याः क्रियायाः कर्तृत्वम् अन्यासां च क्रियाणामकर्तृत्वमिति घटे कर्तृत्वाकर्तृत्वरूपयोः विरुद्धयोः धर्मयो सङ्करः स्यात् तद्भयात् क्रमशः क्रियाकारित्वं न सम्भवति। युगपच्चेत् अर्थक्रियाकारित्वमङ्गीक्रियते तर्हि एकस्मिन् क्षणे सहैव सर्वक्रियाणां सम्पादनात् कर्तृत्वं क्षणान्तरेषु च अकर्तृत्वमिति पुनरपि विरुद्धधर्मप्रसङ्गः अतः स्थिरे घटे अर्थक्रियाणां क्रमो यौगपद्यं वा इत्युभयमपि अनुत्पन्नम्। अतः स्थिरात् घटात् व्यावर्त्यमाने व्यापके क्रमयौगपद्ये व्याप्यमर्थक्रियाकारित्वमपि व्यावर्तयतः। अथ च अर्थक्रियाकारित्वं प्रतीयते। तच्च स्थिरे घटे अनुपपन्नमिति क्षणिके घटे विश्राम्यति एवं बौद्धानां मते क्षणभङ्गवादस्य सिद्धिः, तन्निराकरणाय अस्याः कारिकाया आरम्भः 'न वैजात्यं विना तत् स्यात्' क्षणभङ्गवादे अङ्कुरकरवद्रूपत्वं वैजात्यं कुशूलस्थात् बीजात् क्षेत्रस्थस्य बीजस्य भेदकम्। वैजात्यं विना क्षणभङ्गवादस्य अनुपपत्तिरिति 'न वैजात्यं विना तत्स्यात्' इत्यस्य प्रथमचरणस्याभिप्रायः। तस्मिन् वैजात्ये स्वीक्रीयमाणे 'चानुमा'नुमितिर्न भवेत् अनुमाने व्याप्तिग्रहस्य, व्याप्तिग्रहे च धूमसामान्यवह्निसामान्ययोः कार्यकारणभावस्य अपरि-

हार्यत्वात्। वैजात्याङ्गीकार्ये च न वह्निसामान्यस्य धूमं सामान्यं प्रति हेतुता अपि तु धूमकुर्वद्रूपत्वविशिष्टस्य वह्निविशेषस्य धूमविशेषं प्रति हेतुता। इति व्याप्तिग्रहासम्भवात् वैजात्यपक्षे अनुमानं न भवेदिति ( 'न तस्मिन्ननुमा भवेत्' इति ) कारिकाया द्वितीय-चरणस्याभिप्रायः क्षणभङ्गवादस्य 'सर्वं क्षणिकं सत्त्वात् जलधरपटलवत्' इत्यनुमानमात्र-साध्यत्वात् अनुमानलोपे क्षणिकत्वसिद्धिरपि न सम्भवतीति 'विना तेन न सिद्धिः' तेन अनुमानेन विना तत्सिद्धिः क्षणिकत्वसिद्धिः न सम्भवतीति तृतीयचरणस्याभिप्रायः।

अत्र बौद्धः ब्रूते यत् अनुमानाभावेऽपि प्रत्यक्षस्य वर्तमानमात्रग्राहकत्वात् वर्तमानत्वस्य च एकक्षणवृत्तित्वात् प्रत्यक्षेणैव क्षणिकत्वसिद्धिः। अतोऽनुमानलोपेऽपि न क्षणिकत्ववादस्य काचित् क्षतिः। अस्य पूर्वपक्षस्य निवारणार्थं ('नाध्यक्षं निश्चयं विना') इति कारिकायाश्चतुर्थश्चरणः निश्चयं क्षणिकत्वविषयकं सविकल्पकं विना अध्यक्षं क्षणिकत्वविषयकं निर्विकल्पकमपि न सम्भवतीति न प्रत्यक्षेण नाप्यनुमानेन क्षणिकत्वसिद्धिः अतः क्षणिकत्ववादः सर्वथैव अप्रामाणिक इति ग्रन्थकारस्याभिप्रायः। ( का० १-१६ )

**बौद्धाभिमतस्य क्षणभङ्गवादस्य प्रकारान्तरेण निराकरणम् (का० १-१७)**

बौद्धाः क्षणभङ्गवादिनाः नैयायिकाश्च तद्विरोधिनः इति तयोर्विप्रतिपत्तिजन्यः क्षणिकत्वविषये सन्देहः, न तु क्षणिकत्वनिराकरणमिति बौद्धस्य पूर्वपक्षः। तन्निराकरणाय अस्याः कारिकाया आरम्भः तत्र किं—(१) घटस्य स्थैर्यविषये सन्देहः? (२) आहोस्वित् स्थैर्यज्ञानस्य ग्रहणविषये सन्देहः? ( ३ ) आहोस्वित् प्रामाण्यविषये सन्देहः इति त्रयः पक्षाः। तत्र ( १ ) न स्थैर्ये सन्देहः सम्भवति 'सोऽयं घटः' इति प्रत्यभिज्ञया घटस्थैर्यस्य ग्रहीतत्वात्। ( २ ) न च प्रत्यभिज्ञया ग्रहणे सन्देहः 'घटं प्रत्यभिजानामि' इत्यनुव्यवसायेन प्रत्यभिज्ञाया विषयकरणात् ( ३ ) प्रामाण्ये सन्देहः इति तृतीयः पक्षः तत्रापि ( १ ) किं ज्ञानमात्रस्य प्रामाण्ये सन्देहः ( २ ) आहोस्वित् प्रत्यभिज्ञानस्य प्रामाण्ये सन्देहः तत्र न ज्ञानमात्रस्य प्रामाण्ये सन्देहः विरोधात्। ज्ञानमात्रस्य प्रामाण्यनिश्चये सन्देहज्ञानस्यापि प्रामाण्यमनिश्चितमिति सन्देहवादे विरोधः, अतो न ज्ञानमात्रस्य प्रामाण्ये सन्देहः इति कारिकायाः पूर्वार्धेन त्रयः पक्षाः निराकृताः। 'स्थैर्यदृष्ट्योर्न सन्देहः' न प्रामाण्ये विरोधितः इति घटस्थैर्ये न सन्देहः प्रत्यभिज्ञया तस्य विषयिकरणात् दृष्टापि न सन्देहः अनुव्यवसायेन तद् ग्रहणात्, प्रामाण्यमात्रेऽपि न सन्देहः विरोधादिति अन्ततः प्रत्यभिज्ञाप्रामाण्ये सन्देह इति चतुर्थः पक्षोऽवशिष्यते, तन्निराकरणाय कारिकाया उत्तरार्धः प्रारभ्यते।

प्रतिभिज्ञाप्रामाण्यसन्देहस्य अयमाशयः—यथा 'लूनपुनर्जातकेशेषु' 'तयेव अमी-केशा' इति सादृश्यवशात् भिन्नेष्वपि केशेषु 'तयेवामी' इति प्रत्यभिज्ञानम्। एवं भिन्नेष्वपि घटेषु सोऽयं घटः इति सादृश्यमूलकं मिथ्याज्ञानम्। घटस्य अभेदे तु घटे न विधीयमानानामर्थक्रियाणां क्रमशः यौगपद्ये वा कर्तृत्वाकर्तृत्वरूपौ विरुद्धौ धर्मौ प्रसज्येतामिति पूर्वमुक्तम्। अतो न घटस्य स्थैर्यमिति क्षणभङ्गवादनिराकरणपरायां पूर्वकारिकायां पूर्वपक्षिणा बौद्धेन प्रतिपादितं बौद्धस्य तामेव वाचोयुक्तिमवलम्ब्य अत्र घटस्य स्थैर्यमेकत्वं च साध्यते 'एकतानिर्णयो येन क्षणे तेन स्थिरे मतः' येन विरुद्धधर्मसंसर्ग-

राहित्यरूपेण प्रमाणेन क्षणे क्षणिके घटे एकतानिर्णयः क्रियते तेनैव विरुद्धधर्मसंसर्ग-राहित्यरूपेण प्रमाणेन स्थिरे स्थिरपक्षेऽपि एकतानिर्णयः कार्यः। अयंभावः—क्षणिकेऽपि घटे तद्देशवृत्तित्वं तत्कालवृत्तित्वं च अवश्यमेवाभ्युपेयम्, एकस्य क्षणिकस्य घटस्य कालदेशरूपाश्रयद्वयवृत्तित्वे विरोधात् क्षणिकेऽपि घटे पुनर्भेदो भवेत्। तन्निराकरणाय बौद्धोऽनयोः धर्मयोर्विरोधाभावं स्वीकरोति। एवमेव कर्तृत्वाकृत्वरूपयोः उभयोः धर्मयोः कालभेदेन एकस्मिन्नर्थे देशभेदे च एकस्मिन् कालेऽपि सम्भवात् अविरोधः। अतो यथा विरुद्धधर्मसंसर्गराहित्यरूपेण प्रमाणेन भवता बौद्धेन क्षणिके घटे एकतानिर्णयः क्रियते, तेनैव विरुद्धधर्मसंसर्गराहित्यरूपेण प्रमाणेन स्थिरेऽपि घटे एकतानिर्णयः कार्यः। अतः क्षणभङ्गवादो नोपपन्नः। ( का० १-१७ )

**कारणत्वमुपपादयति ( का० १-१८ )—**

पूर्वकारिकासु आत्मनिष्ठेऽलौकिकपरलोकसाधनभूते अदृष्टे साधितेऽपि चार्वाकः पुनः कारणत्वनिराकरणाय पूर्वपक्षमुत्थापयति। तत्र कारणत्वं स्वाभाविकमौपादिकं वा कारणस्य स्वाभाविकत्वे दोषत्रयं भवति। यथा नीलस्य स्वाभाविकत्वे सर्वान् प्रत्यविशेषात् सर्वत्र नीलव्यवहारः, एवं कारणस्य स्वाभाविकत्वे सर्वान् प्रत्यविशेषात् सर्वं सर्वस्य कारणं स्यात् इत्येको दोषः, उत्पत्तेरारभ्य कार्यं स्यात् इति च द्वितीयो दोषः; कारणस्य औपादिकपक्षे च उपाधेः स्वाभाविकत्वमौपादिकत्वं वा इति द्वौ विकल्पौ, तत्र उपाधेः स्वाभाविकत्वे कारणत्वस्य स्वाभाविकत्वं पर्यवस्यति, तथा च पूर्वोक्तं दोषद्वयं तदवस्थमेव, औपादिकत्वे च अनवस्थाप्रसङ्गः तस्मात् कारणत्वं न स्वाभाविकं न औपादिकमिति कपोलकल्पितमपारमार्थिकं च।

किं च कारणत्वस्य पारमार्थिकत्वसाधनाय साधारणत्वमपि वक्तव्यं 'यत् पारमार्थिकं तत् साधारणमि'ति न्यायात्। साधारणे च तन्त्वादीनां कारणत्वे सर्वं सर्वस्य कारणं स्यात् इति पूर्वोक्तदोषप्रसङ्गः, असाधारणे च 'यन्न साधारणं न तत्पारमार्थिकं' यथा स्वप्नदृष्टं वस्तु, असाधारणं स्वप्नदृष्टं वस्तु अनेकैः पुरुषैः गृह्यमाणं न भवति इति तत्पारमार्थिकमपि न भवति इति कारणत्वं यदि न साधारणं न पारमार्थिकं केवलं स्वबुद्धिकल्पितमिति पूर्वपक्षस्याभिप्रायः।

एवं पूर्वपक्षे प्राप्ते तन्निराकरणाय 'हेतुशक्तिमनादृत्य नीलाद्यपि न वस्तु सत्' इति कारिकायाः पूर्वार्द्धः हेतुशक्तिं कारणत्वमनादृत्य अस्वीकृत्य नीलाद्यपि उदाह्रियमाणं वस्तु न सत् सिध्यति। अयम्भावः—भवता पूर्वपक्षिणा स्वपक्षसाधने नीलाद्युदाहरणरूपेण प्रस्तुतम्। पूर्वपक्षिणः नित्यस्य कस्यापि पदार्थस्य अनङ्गीकारात् अनित्यमेव नीलमुदाहरणरूपेण प्रस्तुतमिति निश्चितम्। कारणाभावे च अनित्यनीलस्य कथमुत्पत्तिः तदभावे च कथं भवतां पक्षसिद्धिः, इति अकामेनापि भवता पूर्वपक्षिणः कारणत्वमभ्युपेयम्।

'कारणत्वस्य स्वाभाविकत्वे उत्पत्तेरारभ्य कार्यं स्यात्' इति यो दोष उक्तः, तन्निराकरणाय 'तदुक्तं तत्र तच्छक्तमि'ति कारिकायाः तृतीयश्चरणः, तदुक्तं सहकारियुक्तं तत्कारणं

तत्र कार्ये शक्तं सहकारियुक्तमेव कारणं कार्यजनने समर्थमित्यर्थः, अत उत्पत्तेरारभ्य कार्यं स्यादिति दोषो नोपपद्यते ।

कारणत्वस्य स्वाभाविकत्वे साधारणे च सर्वं सर्वस्य कारणं स्यात् इति यो दोषः उक्तः, सोऽप्यसङ्गतः 'नीलं स्वाभाविकं साधारणं वा' इत्यस्य एतावानेवाभिप्रायः यः कश्चिदपि नीलम् पश्यति, स तत्र नीलव्यवहारं करोति सर्वं नीलं स्यात् इति तु तस्य नाभिप्रायः अन्यथा पीतमपि नीलं स्यात् एवं कारणत्वं स्वाभाविकं साधारणं वा इत्यस्य अयमेवाभिप्रायः यत् यः कश्चिदपि सहकारियुक्तं कारणमिच्छति स तत्र कारणव्यवहारं करिष्यति न तु सर्वं सर्वस्य कारणं स्यात् इति तस्याभिप्रायः । तदेतद् सर्वमभिप्रेत्य कारिकायाः चतुर्थश्चरणे 'इति साधारणं न किम्' कारणत्वं साधारणं 'किमिति न मन्तव्यम्' अवश्यमेव मन्तव्यमित्यभिप्रायः । ( का० १-१८ )

**व्यापकस्य नित्यस्याऽपि तत्त्वस्य कारणत्वं साधयति ( का० १-१९ )—**

अस्यामपि कारिकायां चार्वाकः कारणत्वनिराकरणाय प्रयतते । तत्र पूर्वपक्षे 'कार्यानुकृतान्वयव्यतिरेकि कारणम्' इति कारणलक्षणमभ्युपेत्य चार्वाकः अदृष्टं प्रति आत्मनोऽकारणत्वं प्रतिपादयति । तन्मते आत्मसत्त्वे अदृष्टसत्ता इति अन्वयसम्भवेऽपि आत्मनो नित्यत्वात् विभुत्वाच्च क्वापि देशे काले वा आत्माभावः सम्भवात् 'आत्माभावेऽदृष्टाभावः' इति व्यतिरेकानुपपत्तेः आत्मनोऽदृष्टं प्रति न कारणत्वम् एवं समवायिकारणभावे असमवायिनिमित्तकारणाभ्यामपि कार्यं न जन्यते इति आत्मनिष्ठमदृष्टं न आत्मजन्यम् अतो नित्यं स्वीकार्यं नित्याच्च अदृष्टात् न प्रतिनियतयोगसिद्धिः इति **'भक्षितेऽपि लसुने न शान्तो व्याधिः ।'** स्वीकृतेऽप्यात्मनिष्ठेऽदृष्टे न प्रतिनियतो योगः । अतो व्यर्थैव अदृष्टकल्पना इति पूर्वपक्षः । अस्य समाधानाय कारिकाया आरम्भः । सिद्धान्तपक्षे 'कार्यानुकृतान्वयव्यतिरेकि कारणम्' इति न कारणलक्षणम्, तत्स्थाने 'अनन्यथासिद्धिनियतपूर्वभावित्वं कारणमि'ति कारणलक्षणम् तच्च आत्मन्यपि सम्भवतीति आत्माऽपि भवति अदृष्टकारणम् । अत एव व्यापकस्य नित्यस्यापि आत्मनः कारणत्वं 'येन केनचित्' धर्मिग्राहकमानेन आत्मसाधकानुमानेन 'मीयते' ज्ञायते इत्यर्थः । सुखदुःखेच्छाद्वेषादिलिङ्गैरात्मनः सिद्धिर्भवति इच्छाद्वेषादीनामाधारत्वेन कारणत्वेन च तेनैव आत्मासाधकानुमानेन तस्य कारणत्वमपि सिद्धं भवति इत्युक्तं 'व्यापकस्यापि नित्यस्य' आत्मनः हेतुत्वं येन केनचित् धर्मिग्राहकमानेन मीयते इत्यर्थः, 'अन्यथा' आत्मनः कारणत्वास्वीकारे 'धर्मिधीरेव न' आत्मज्ञानमेव न सम्भवतीति भावः ।

एवं 'कार्यानुकृतान्वयव्यतिरेकिकारणम्' इति कारणलक्षणमभ्युपेत्य पूर्वपक्षः उत्थापितः 'अनन्यथासिद्धनियतपूर्वभावित्वं कारणत्वमि'ति कारणलक्षणमभ्युपेत्य च स पूर्वपक्षः निरस्तः ।

॥ इति प्रथमः स्तबकः ॥

## द्वितीयः स्तबकः

### वेदप्रामाण्यसाधनाय, ईश्वरं साधयति ( का० २-१ )—

अन्यथाऽपि परलोकसाधनानुष्ठानसम्भवादिति द्वितीयविप्रतिपत्तिः मीमांसकानाम्, मीमांसकाः हि वेदानुयायिनो कर्मकाण्डपराश्च सन्तोऽपि अनीश्वरवादिनः, अनीश्वरवादपक्षे च वेदस्योत्पत्तिः तत्प्रामाण्यं च नोपपद्यते इति वेदप्रामाण्यमन्तरा वैदिकेषु कर्मसु प्रवृत्तिरपि नोपपद्यते, अतः कर्मकाण्डे प्रवृत्त्युपपादनार्थं वेदस्य प्रामाण्यम्। वेदस्योत्पत्त्यर्थं प्रमाण्यार्थञ्च ईश्वरोऽवश्यमभ्युपेयः इति परलोकसाधनानां यागाद्यनुष्ठानमीश्वरापेक्षमेव इति नैयायिकानां सिद्धान्तः।

तत्र मीमांसकः प्रत्यवतिष्ठते अन्यथापि ईश्वरं विनाऽपि परलोकसाधनस्य यागादेरनुष्ठानस्य सम्भवात्, अयं भावः—यागादौ प्रवृत्त्यर्थं तत्र स्वर्गसाधनताज्ञानमिष्टसाधनताज्ञानं वा अपेक्षितम्। तच्च ज्ञानं वेदादेव भवति न ईश्वरात् वेदस्य च नेश्वरादुत्पत्तिः किन्तु नित्यो वेदः अपौरुषेयश्च नित्यत्वात् निर्दुष्टत्वाच्च वेदस्य प्रामाण्यं महाजनपरिग्रहेण च प्रामाण्यस्य ग्रह इति वेदप्रामाण्यग्रहणाय यागादिकरणे प्रवृत्त्यर्थं वा ईश्वरस्य न काचिदपेक्षा इत्युक्तम् 'अन्यथाऽपि परलोकसाधनानुष्ठानसम्भवात्' इत्यस्यामविप्रतिपत्तौ—

'प्रमायाः परतन्त्रत्वात् सर्गप्रलयसम्भवात्।
तदन्यस्मिन्नविश्वासान्न विधान्तरसम्भवः॥'

तन्निराकरणाय कारिकाया आरम्भः प्रमायाः परतन्त्रत्वात् शाब्दी प्रमा वक्तृयथार्थवाक्यार्थधीरूपगुणजन्या। गुणाधारतया च ईश्वरसिद्धिः। यच्च नित्यत्वात् वेदस्य प्रामाण्यं महाजने परिग्रहेण च तस्य ग्रहणमिति प्रतिज्ञातं तदपि 'सर्गप्रलयसम्भवात्' नोपपद्यते, प्रलयकाले वेदस्यापि नाशात् प्रलयोत्तरं सर्गादौ महाजनपरिग्रहस्याप्यभावाच्च, अतो वेदकर्तृत्वेन ईश्वरोऽवश्यमभ्युपगन्तव्यः।

योगर्धिसम्पादितसार्वज्ञ्यैः कपिलादिभिरेव कृतो वेदः इति पूर्वपक्षे आह—'तदन्यस्मिन् अविश्वासादि'ति। कपिलादयोऽसर्वज्ञाश्चेत् तेषु विश्वासो न सम्भवति इति न तत्कृतो वेदः। सर्वज्ञाश्चेत् तर्हि बहूनां वेदकर्तृत्वे गौरवात् एक एव तादृशः कल्प्यतां स च ईश्वर एव इति 'न विधान्तरसम्भवः' इत्युक्तम्। कर्मकाण्डे प्रवृत्त्युपपादनार्थमीश्वराङ्गीकारं विना न कश्चित् मार्ग इत्यर्थः। ( का० २-१ )

### ईश्वरसिद्ध्यर्थं प्रलये बाधकान् हेतून् प्रतिक्षिपति ( का० २-२ )—

पूर्वस्यां कारिकायां सर्गप्रलयसम्भवादिति प्रलयस्य प्रलये सञ्जाते वेदस्यापि नाशः सृष्टेरपि च नाशः इति सृष्ट्युत्पादनार्थं वेदोपदेशार्थञ्च ईश्वरोऽवश्यमभ्युपगन्तव्यः इति

नैयायिकेनोक्तम् । तन्निराकरणाय मीमांसकोऽस्यां कारिकायां प्रलये बाधकान् उपन्यस्य प्रलयस्यैव निषेधं करोति । प्रलयाभावे न वेदोत्पादनार्थं न वा सृष्ट्युत्पादनार्थमीश्वरस्य किञ्चित् प्रयोजनमिति तस्याभिप्रायः तत्र प्रलयबाधकान् अधोऽङ्कितान् हेतून् पूर्वपक्षी मीमांसकः प्रस्तौति—

१. अहोरात्रस्य अव्यवहिताहोरात्रपूर्वकत्वं लोके दृश्यते । आद्यस्य अहोरात्रस्य अव्यवहिताहोरात्रपूर्वकत्वं न स्यादिति प्रथमं प्रलये बाधकम् ।

२. प्रलयसाधनार्थं सर्वेषां प्राणिनामदृष्टस्य युगपद् वृत्तिनिरोधोऽपेक्षितः, स च न सम्भवतीति प्रलये द्वितीयं बाधकम् ।

३. ब्राह्मणस्य ब्राह्मणपुत्रत्वनियमात् सर्गादौ ब्राह्मणाभावात् अग्रेऽपि ब्राह्मणव्यवहाराभावः इति तृतीयं बाधकम् ।

४. कलासु विद्यासु नैपुण्यं पूर्वदर्शनसापेक्षं भवति सर्गादौ तादृशस्य पूर्वदर्शनस्याभावात् तदुत्तरमपि कलादिनैपुण्यं न स्यात इति चतुर्थं बाधकम् । अतो न प्रलयसिद्धिः इति पूर्वपक्षे प्राप्ते तन्निराकरणाय **'वर्षादिवद्भवोपाधि'** इत्यादिद्वितीयकारिकाया आरम्भः ।

१. तत्र अहोरात्रस्य अहोरात्रपूर्वकत्वे साध्ये अहोरात्रत्वात इति यो हेतुरुपन्यस्यते स उपाधिसद्भावाद् व्याप्यत्वासिद्धो हेत्वाभासः 'साध्यव्याप्यत्वे सति साधनाव्यापकत्वमि'-त्युपाधिलक्षणम् । अत्र अहोरात्रत्वरूपे हेतौ भवकाल उपाधिः, अहोरात्रपूर्वकत्वमत्र साध्यम्, अहोरात्रत्वादिति च हेतुः। भवकालश्चोपाधिः यत्र यत्र अहोरात्रपूर्वकत्वं तत्र तत्र अवश्यं भवकाल इति साध्यव्यापकत्वं, यत्र यत्र अहोरात्रत्वं तत्र तत्र भवकालसम्बन्धः इति न इति साधनाव्यापकत्वम् । इत्युक्तं 'वर्षादिवत् भवोपाधिः' । यथा वर्षादिनस्य अव्यवहितवर्षादिनपूर्वकत्वे साध्ये राशिविशेषावच्छिन्नकाल उपाधिः एवम् अव्यवहिताहोरात्रपूर्वकत्वे साध्ये संसारः अवच्छेदककालोपाधिः ।

२. युगपत् सर्वप्राणिनामदृष्टस्य वृत्तिनिरोधे या अनुपपत्तिर्दर्शिता, सा सुषुप्तिकाले कतिपयव्यक्तिनिष्ठभोगजनकादृष्टनिरोधवत् कालविशेषे समस्तमात्मनामदृष्टस्य युगपत् वृत्तिनिरोधसम्भवात् अनुपपन्नः । तदुक्तं 'वृत्तिनिरोधः सुषुप्तिवत्' यथा सुषुप्तिकाले बहूनां प्राणिनां युगपदेव अदृष्टस्य वृत्तिनिरोधो भवति । एवम् प्रलयकाले सर्वेषामपि प्राणिनां युगपद् वृत्तिनिरोधः सम्भवति ।

३. यश्च ब्राह्मणादिवर्णव्यवहारः प्रलये बाधको दर्शितः तन्निरासाय 'उद्भिद्वृश्चिकवद् वर्णाः' इत्युक्तं यथा वृश्चिकस्य वृश्चिकात् गोमयाच्च, एवं सृष्टिकाले ब्राह्मणात् ब्राह्मणस्योत्पत्तिः सर्गादौ तु अदृष्टादेव ब्राह्मणोत्पत्तिः न ब्राह्मणादिवर्णव्यवहाराभावः प्रलये बाधकः ।

४. यच्च विद्याकलादिनैपुण्यं पूर्वदर्शनसापेक्षं प्रलयाभ्युपगमे न स्यात इति बाधकमुपन्यस्तं तन्निराकरणायाह 'मायावत् समयादयेति' । यथा—मायिकः काष्ठपुत्तलि-

कादिकं सूत्रसञ्चाराधिष्ठितं कृत्वा सर्वं कर्म कारयति एवं सृष्ट्यादौ परमात्मा सर्वमपि विद्याकलादिकं शिक्षयति। अतः प्रलये न कश्चिदपि बाधकः इति ग्रन्थकारस्याभिप्रायः।

(का० २-२)

**प्रलयसाधकान् हेतून् दर्शयति (का० २-३)—**

जन्मसंस्कारविद्यादीनां क्रमशो ह्रासो दृश्यते तेन अनुमीयते यत्कालान्तरे वेदादिसम्प्रदायोऽयमत्यन्तमुच्छिद्यते ह्रसमानत्वात् पूर्वं मानस्यः प्रजाः, ततः पुत्रकाममात्रप्रयुक्तमैथुनजाः, इदानीं कथञ्चिदिति। पूर्वं चरुप्रभृतिषु संस्कारः, ततो गर्भे, इदानीं कथञ्चिदिति संस्कारह्रासः। पूर्वं चतुर्णां वेदानामध्ययनं ततः एकैकस्याः शाखायाः ततः शाखादीनाम्, इदानीं तत्राप्यप्रवृत्तिः, इति विद्याह्रासः। आदिपदात् धर्मविद्यावृत्त्यादीनां संग्रहः पूर्वं चतुष्पादधर्मः कलौ तु स्खलत्तद्दानैकपादः इति धर्मह्रासः एवं शक्तेः स्वाध्यायस्य कर्मणां च प्रतिदिनं ह्रासः, एतेषां सर्वेषां ह्रासदर्शनात् वेदादिसम्प्रदायस्योच्छेदे प्रलये सति च पुनः सृष्ट्युत्पादनार्थं वेदोपदेशार्थं च ईश्वरोऽवश्यमभ्युपगन्तव्यः। इति नैयायिकानां सिद्धान्तपक्षः।

॥ इति द्वितीयः स्तबकः ॥



## तृतीयः स्तबकः

### अनुपलब्धेरीश्वराभावसाधकत्वं निवारयति ( का० ३-१ )—

तदभावावेदकप्रमाणसम्भवादिति तृतीयविप्रतिपत्तिर्बौद्धानां तन्निराकरणाय तृतीय-स्तबकस्यारम्भः। तत्र सर्वतः प्राक् अनुपलब्धेरभावावेदकत्वमुत्थाप्य निराक्रियते। पूर्वपक्षे यथा भूतले घटस्याऽनुपलब्ध्या घटाभावो निश्चीयते। एवमीश्वरस्याऽनुपलब्ध्या ईश्वराभावो निश्चितः इति पूर्वपक्षः। सिद्धान्ते तु न अनुपलब्धिरभावसाधिका, किन्तु योग्यानुपलब्धिः। अनुपलब्धिमात्रस्य अभावसाधकत्वे तु आकाशधर्माधर्मादिकस्य अतीन्द्रियमात्रस्य विलोपः स्यात्। अतो नानुपलब्धिरभावसाधिका, किन्तु योग्यानुपलब्धिः। 'योग्यस्य प्रत्यक्ष-योग्यस्य अनुपलब्धिः' अभावसाधिका सा च ईश्वरे न घटते ईश्वरस्य प्रत्यक्षायोग्यत्वात् इति न अनुपलब्ध्या ईश्वराभावः सिद्ध्यति।

अत्र पूर्वपक्षी शङ्कते, यदि अनुपलब्धिर्नाभावसाधिका तदा शशश्रृङ्गस्यापि प्रत्यक्षा-योग्यत्वात् अनुपलब्ध्या तदभावो न भविष्यति। अत्र श्रृङ्गं प्रत्यक्षयोग्यमेव तस्य शशे सम्बन्धाभाव एव प्रतीयते। यथा भूतले घटो नास्ति इत्यत्र भूतले घटसम्बन्धाभावः। अतः प्रत्यक्षयोग्यस्य श्रृङ्गस्य शशे अनुपलब्ध्या तदभावः सिद्ध एव इति समाधानः।

अत्र पूर्वपक्षी शशश्रृङ्गं प्रत्यक्षयोग्यं पदार्थान्तरं मत्वा पुनः शङ्कते। प्रत्यक्षायोग्यस्य शशश्रृङ्गस्य कथं बाधनं भविष्यति। अनुपलब्धेरेव अभावसाधकत्वे तु शशश्रृङ्गस्याभावः सिद्ध्यति। योग्यानुपलब्धेस्तु अभावसाधकत्वे तदभावो न सिद्ध्यति इति पूर्वपक्षस्याशयः, तत्समाधानाय 'क्वायोग्यं बाध्यते श्रृङ्गम्' इति कारिकाया तृतीयश्चरणः अयोग्यं शशश्रृङ्गं न बाध्यते, किन्तु तत्र साधकाभाव एव तदभावे प्रमाणं, न चात्र ईश्वरे साधकाभावः पञ्चमस्तबके ईश्वरसाधकहेतूनां वक्ष्यमाणत्वात्।

ईश्वरो नास्ति 'ईश्वरः न क्षित्यादिकर्ता शरीरसम्बन्धाभावात् प्रयोजनाभावाच्च' इत्य-नुमानमपि नोपपन्नं पक्षभूतस्य ईश्वरस्यासिद्धत्वात् हेतोराश्रयासिद्धत्वेन असाधकत्वात् इत्युक्तं 'क्वानुमानमाश्रयमिति।' ( का० ३-१ )

### अनुमानस्य अनुपलब्धेश्च ईश्वरबाधकत्वं निवारयति ( का० ३-२ )—

शशश्रृङ्गं नास्ति इत्यत्र प्रत्यक्षयोग्यस्य श्रृङ्गस्य शशे सम्बन्धाभाव एव साध्यते किन्तु पूर्वपक्षी यदि शशश्रृङ्गं पदार्थान्तरं मन्यते तदा तस्यापि प्रत्यक्षयोग्यत्वं योग्यता चात्र दुष्टोपलम्भसामग्री घटिता तस्यां च सत्यां शशश्रृङ्गस्यापि ग्रहणं भविष्यत्येव इत्युक्तम्—

'दुष्टोपलम्भसामग्री शशश्रृङ्गादियोग्यता।'

'न तस्यां नोपलम्भोऽस्ति', तस्यां दोषघटितसामग्र्यां सत्याम् अनुपलम्भो नास्ति, अवश्यम् उपलम्भ इति भावः 'नास्ति सानुपलम्भने' यदि शशश्रृंगस्य उपलम्भो न भवति तदा सा दोषघटिता उपलम्भसामग्री नास्तीति मन्तव्यम्।

एवमनुपलब्धेर्नाभावसाधकत्वं किन्तु योग्यानुपलब्धेरेव अभावसाधकत्वमीश्वरस्य च प्रत्यक्षायोग्यत्वात् नानुपलब्धिमात्रात् तदभावसिद्धिरिति सिद्धान्तपक्षस्याशयः। (का० ३-२)

**अनुमानस्य ईश्वरबाधकत्वं निवारयति ( का० ३-३ )—**

पूर्वपक्षिणः 'ईश्वरो नास्ति' 'ईश्वरः कर्तृत्वाभाववान्' वा 'शरीरसम्बन्धाभावात् प्रयोजनाभावाच्च' इत्यनुमानद्वयमुपन्यस्तमासीत्। तच्च अनुमानद्वयमाश्रयासिद्धत्वात् पूर्वकारिकायां निरस्तम्। तत्र आश्रयासिद्धिवारणाय असत्ख्यात्युपनीतं भ्रमसिद्धमीश्वरं पक्षीकृत्य पुनरपि तदेव अनुमानद्वयम् उपस्थापयति पूर्वपक्षी तन्निराकरणाय कारिकाऽऽरम्भः।

'क्षितिकर्तृत्वाभाववान् ईश्वरः' इत्यस्मिन् अनुमाने कर्तृत्वाभावो विशेषणमीश्वरश्च तदाश्रयो विशेष्यभूतः 'ईश्वरो नास्ति' इत्यस्मिन् अनुमाने च ईश्वरोऽभावस्य प्रतियोगी एवमेकत्र अनुमाने विशेषणाश्रयता अपरत्र च प्रतियोगिता एतद्धर्मद्वयं पारमार्थिकपदार्थनिष्ठमेव सम्भवति नालीकपदार्थनिष्ठमित्युक्तम्—'व्यावर्त्याभाववत्तैव भाविकी हि विशेष्यता' व्यावर्त्याप्रतिक्षेप्यः योऽभावः क्षित्यादिकर्तृत्वाभाव इत्यर्थः तद्वत्ता तदाश्रयता भाविकी पारमार्थिकी पदार्थनिष्ठा एव, हि यतः विशेषता विशेषणाश्रयरूपा अतो नालीको न असत्ख्यात्युपनीतो वा ईश्वरः पक्षोऽत्र।

एवमीश्वरो नास्ति इत्यस्मिन् अनुमाने ईश्वरस्य यद् अभावप्रतियोगित्वं तदपि असत्ख्यात्युपनीते ईश्वरे न सम्भवति। यतः प्रतियोगिताऽपि अभावाभावरूपिणी 'वस्तुनः' एव पारमार्थिकपदार्थनिष्ठैव इत्यर्थः। तदुक्तम्—'अभावविरहात्मत्वं वस्तुनः प्रतियोगिता' अभावस्य विरहोऽभावस्य अभावः आत्मा स्वरूपं यस्याः सा प्रतियोगिता वस्तुनः एव पारमार्थिकपदार्थस्यैव नालीकपदार्थस्य इति अनीश्वरवादिनः अनुमानद्वयमपि निरस्तम्। ( का० ३-३ )

**आत्मनि क्षित्यादिकर्त्तृत्वाभावः इष्टापत्तिरूप इति दर्शयति (का० ३-४)—**

ईश्वरो न क्षित्यादिकर्ता न वा सर्वज्ञः शरीरसम्बन्धाभावात् प्रयोजनाभावाच्च इत्यनुमानेन ईश्वरस्य निषेधसाधने आश्रयसिद्धिः दर्शिताः आसीत्। अतः पूर्वपक्षी ईश्वरं विहाय आत्मानं च पक्षत्वेन स्वीकृत्य आत्मा न सर्वज्ञः न क्षितिकर्ता आत्मत्वात् अस्मदादिवत् इत्यनुमानं पुनः प्रस्तौति तन्निराकरणाय कारिकाया आरम्भः।

पूर्वं बौद्धमतेन अनुपलब्धेरभावसाधकत्वं निरस्तम्। तत्राऽनुपलब्धेरभावसाधकत्वे अनुमानमात्रस्य विलोपः स्यात् इति युक्तिरुपन्यस्ता इदानीं चार्वाकः पुनस्तमेव पूर्वपक्षमुत्थापयति बौद्धचार्वाकयोरत्र अयं विशेषः यद् बौद्धो धर्माधर्मादिकम् अनुमेयमर्थमनुमानप्रमाणं च पृथक् स्वीकरोति, अत एव तत्पक्षे धर्माधर्मादीनामभावप्रसङ्गात् अनुमानविलोपप्रसंगाच्च अनुपलब्धिमात्रस्य अभावसाधकत्वं नोपपद्यते। चार्वाकस्तु न धर्मादिकं स्वीकरोति नाप्यनुमानम्, अतस्तन्मते धर्मादिविलोपोऽनुमानविलोपश्च इष्ट एव, अतः स अनुपलब्धिमात्रस्य अभावसाधकत्वं ब्रूते अनुमानाभावे च धूमादि-

दर्शनात् वह्न्यर्थिनां प्रवृत्तिः सम्भावनामात्रात् सन्देहमात्रादित्यर्थः। भवतीति ब्रूते तन्निराकरणाय कारिकाया आरम्भः।

सिद्धान्तपक्षस्याऽयमाशयः—सम्भावना हि सन्देहः स न दर्शनपक्षे उपपद्यते न चाप्यदर्शनपक्षे इत्युक्तं—'दृष्ट्यदृष्ट्योर्न सन्देहो भावाभावविनिश्चयात्'। वह्न्यादेः दर्शनपक्षे तस्य भावविनिश्चयात् न सन्देहः, अदर्शनपक्षे च अभावविनिश्चयात् न सन्देहः इति सम्भावनामात्रेण या प्रवृत्तिः चार्वाकेणोक्ता सा नोपपद्यते इत्यनुमानं स्वीकार्यमेव। किञ्चाऽनुमानाभावे अनुपलब्ध्या चक्षुरादीनाम् इन्द्रियाणामपि अभावः चक्षुरादीनामप्रत्यक्षत्वात् अनुमानैकसाध्यत्वात् च, अत उक्तम् 'अदृष्टिबाधिते हेतौ प्रत्यक्षमपि दुर्लभम्' हेतौ प्रत्यक्षकारणे चक्षुरादौ अदृष्टयः अनुपलब्ध्या बाधिते सति तदभावनिश्चये सति प्रत्यक्षमपि दुर्लभं प्रत्यक्षमपि न स्यादित्यर्थः। अतोऽनुमानविलोपोऽनिष्टः अनुपलब्धिमात्रस्य अभावसाधकत्वमपि अनुपपन्नमित्यर्थः। ( का० ३-४ )

**व्याप्तिग्रहे शंकासम्भवात् अनुमानविलोप इति पूर्वपक्षं निवारयति ( का० ३-७ )—**

चार्वाकः पुनरनुमानखण्डनाय शंकते यत् धूमादिना वह्न्यनुमानस्थले वह्निधूमयोर्व्याप्तिसम्बन्धेऽयोग्योपाधिशंका यदि क्रियेत तर्हि अनुपलब्ध्या न शंकाभावनिश्चयः अतो न व्याप्तिग्रहः इति गतमनुमानेन। अस्य पूर्वपक्षस्य निराकरणार्थं कारिकाया आरम्भः।

सिद्धान्तपक्षस्याऽयमाशयः यत् वर्तमानदेशकालस्थयोः वह्निधूमयोः सम्बन्धस्य प्रत्यक्षत्वात् न तत्रोपाधिशंका इति कालान्तरदेशान्तरस्थयोरेव वह्निधूमयोः सम्बन्धे उपाधिशंका सम्भवति। तयोश्च कालान्तरदेशान्तरस्थयोः वह्निधूमयोर्ग्रहणं नानुमानमन्तरा भवति न ततस्तरां सुतरामनुमानसिद्धिः अतो न शंकापक्षे नाप्यशंकापक्षे अनुमानविलोपः सम्भवति।

अत्र चार्वाकः पुनः पृच्छति यत् अनुमानविलोपासम्भवेऽपि वह्निधूमयोः सम्बन्धे या उपाधिशंका कृता तस्याः कथं निराकरणमित्युक्तम् 'तर्कः शङ्कावधिर्मतः'। धूमो यदि वह्निव्याप्यो न स्यात् वह्निजन्यो न स्यादिति तर्केणोपाधिशंकाया निवारणम्।

अत्र चार्वाकः पुनः शङ्कते यत् तर्कस्य मूलेऽपि व्याप्तिरन्तर्भूता भवति। तस्यामपि उपाधिशंका सम्भवति अस्य पूर्वपक्षस्य समाधानाय कारिकायामुक्तं 'व्याघातावधिराशंका' इति यावत् प्रत्यक्षादिप्रमाणैर्विरोधो न भवति तावत् शंकां कर्तुं शक्यते समुपस्थिते तु प्रत्यक्षादिबाधे शंका न प्रसरति, अतस्तर्कमूलभूतायां व्याप्तौ प्रत्यक्षप्रमाणविरोधात् शंका न भवति। ( का० ३-७ )

**उपमानप्रमाणस्य ईश्वरबाधकत्वनिराकरणम् तत्र वैशेषिकमतेन उपमानप्रमाणस्य खण्डनम् ( का० ३-८ )—**

अधुना उपमानप्रमाणस्य ईश्वरे बाधकत्वनिराकरणाय कारिकापञ्चकं प्रस्तौति ग्रन्थकारः। तत्र प्रथमं वैशेषिकमतेन समाधानम्। वैशेषिका हि पृथक् उपमानप्रमाणं न

मन्यन्ते, अतः उपमानप्रमाणस्याभावात् नोपमानमीश्वरे बाधकमिति वैशेषिकाणामभिप्रायः। स च आद्येन कारिकाद्वयेन दर्शितः, तदनन्तरं नैयायिकः स्वमतेन उपमानस्य प्रमाणान्तरत्वं साधयिष्यति कारिकात्रयेण, तच्च उपमानमीश्वरे न बाधकं भिन्नविषयत्वात् इत्यपि दर्शयिष्यति दशमकारिकायाम्।

ये हि उपमानप्रमाणवादिनः ते सादृश्यस्य ग्रहणाय पृथक् उपमानप्रमाणमामनन्ति तथाहि तेषां मते सादृश्यं द्रव्यादिभ्यः पदार्थान्तरं तथा चाऽनुमानम्, सादृश्यं न द्रव्यं, न गुणः, न कर्म, न सामान्यं, न विशेषः, न समवायः, नाभावो वा सामान्येऽपि सत्त्वात् यथा 'गोत्वं नित्यं' तथा अश्वत्वमपि नित्यमिति गोत्वाश्वत्वयोः नित्यत्वरूपं सादृश्यमुपलभ्यते किन्तु सामान्ये द्रव्याद्यन्यतमस्य न कस्यापि सम्भव इति पदार्थान्तरं सादृश्यमिति सिद्धं तच्च न प्रत्यक्षग्राह्यं इन्द्रियपातमात्रेण अप्रतीतेः, नाप्यऽनुमानगम्यं लिंगाप्रतिसन्धानेऽपि प्रतीयमानत्वात्, नापि शब्दगम्यं तस्य असारवत्रिकत्वात्; अतः सादृश्यग्रहणाय पृथक् प्रमाणमङ्गीकरणीयं तच्च उपमानरूपम् एवम् उपमानवादिनो मीमांसकाः सादृश्यग्रहणाय उपमानं पृथक् प्रमाणमिच्छन्ति।

तन्निराकरणाय वैशेषिकाः सादृश्यस्य पदार्थान्तरत्वमेव खण्डयन्ति, तथा हि तन्मते सादृश्यं भावात्मकमभावात्मकं वा ? तद्भिन्नस्य प्रकारान्तरस्याभावात्। तदुक्तं कारिकायाम् 'परस्परविरोधे हि न प्रकारान्तरस्थितिः' भावाभावयोः परस्परविरोधात् यन्न भावात्मकं तदवश्यमभावात्मकं, यच्च नाभावात्मकं तदवश्यं भावात्मकमिति भावाभावविलक्षणस्य तृतीयस्य प्रकारान्तरस्य न सम्भवः। न च उभयात्मकत्वमपि विरुद्धानां विरोधादेव सम्भवति तदुक्तं कारिकायां 'नैकताऽपि विरुद्धानां' भावाभावानामेकता उभयात्मकत्वमपि न सम्भवति भावाभावयोः विरोधमेव प्रमाणयति कारिकाया'मुक्तिमात्रविरोधतः' इति।

अस्यायमभिप्रायः सादृश्यं भावः अभावो वा भावत्वे द्रव्यादिषु षट्सु पदार्थेषु क्वाप्यन्तर्भावः अभावत्वे तु सप्तमे पदार्थेऽन्तर्भावः एवं येन प्रमाणेन द्रव्यादीनां पदार्थानां ग्रहणं तेनैव प्रमाणेन सादृश्यस्यापि ग्रहणमिति न सादृश्यग्रहणाय उपमानं पृथक् प्रमाणमपेक्षितं भवति अत उपमानस्य प्रमाणान्तरस्याभावात् उपमानं न ईश्वरे बाधकम् इति वैशेषिकाणामभिप्रायः। ( का० ३-८ )

## वैशेषिकमतेन उपमानप्रमाणस्य खण्डनम् ( का० ३-९ )—

एवं वैशेषिकैः सादृश्यस्य पदार्थान्तरत्वे निरस्ते मीमांसकः प्राह—भवतु साधर्म्यमेव सादृश्यं, किन्तु तदपि न प्रत्यक्षग्राह्यमिन्द्रियपातमात्रेण अप्रतीतेः, नाप्यनुमानगम्यं लिङ्गप्रतिसंधानेऽपि ज्ञायमानत्वात्, न च शब्दगम्यं तस्यासारवत्रिकत्वात्, अतः साधर्म्यरूपस्य सादृश्यस्य ग्रहणाय अपि उपमानं प्रमाणान्तरमभ्युपेयमिति मीमांसकस्याभिप्रायः। तन्निराकरणाय कारिकायामुक्तं 'साधर्म्यमिव वैधर्म्यं मानमेवं प्रसज्यते' यदि साधर्म्यग्रहणाय पृथक् प्रमाणमभ्युपेतं स्यात्तदा वैधर्म्यस्य ग्रहणाय अपि पृथक् प्रमाणमङ्गीकरणीयं

यदि च वैधर्म्यग्रहणम् अर्थापत्तेर्विषयः इत्युच्यते तदा साधर्म्यमपि अर्थापत्त्यैव गृह्यते इति नोपमानं पृथक् प्रमाणमिति वैशेषिकानां सिद्धान्तः। ( का० ३-९ )

**नैयायिकमतेन उपमानस्य प्रमाणान्तरत्वसाधनम् ईश्वरवादकत्व-निराकरणं च ( का० ३-१० )—**

सादृश्यस्य पदार्थान्तरत्वे निराकृते तद्ग्रहणाय स्वीकृतमुपमानप्रमाणमपि नोपादेय-मिति उपमानप्रमाणे दूषिते नैयायिकः उपमानप्रमाणसाधनार्थं सिद्धान्तपक्षमारभते।

संज्ञासंज्ञिसम्बन्धग्राहकमुपमानप्रमाणम् तथाहि 'यथा गौस्तथा गवयः' इति वाक्यं कुतश्चिदारण्यकात् श्रुत्वा वनं गतो नागरिकः यदा गोसादृश्यविशिष्टं पिण्डं पश्यति तदा यथा 'गौस्तथा गवयः' इत्यतिदेशवाक्यार्थं स्मरन् 'अयं गवयपदवाच्यः' इति संज्ञाभूतस्य गवयशब्दस्य संज्ञिभूतस्य च गवयपिण्डस्य संज्ञासंज्ञिसम्बन्धं वाच्यवाचक-भावं वाऽवधारयति अयं संज्ञासंज्ञिसम्बन्धः प्रत्यक्षानुमानशब्दरूपैः प्रमाणान्तरैरवधा-रयितुं न शक्यते तद् ग्राहकमुपमानं प्रमाणान्तरं मन्तव्यमित्युक्तं कारिकायाम्—

'सम्बन्धस्य परिच्छेदः संज्ञायाः संज्ञिना सह।
प्रत्यक्षादेरसाध्यत्वादुपमानफलं विदुः' ॥ १० ॥

संज्ञाया गवयादिरूपसंज्ञाया संज्ञिना गोपिण्डादिना सह सम्बन्धस्य वाच्यवाचक-सम्बन्धस्य परिच्छेदः निश्चयः प्रत्यक्षादेरसाध्यत्वात् उपमानस्य फलमिति मन्तव्यम्। एवं उपमानप्रमाणमवश्यं स्वीकार्यं किन्तु संज्ञासंज्ञिसम्बन्धमात्रबोधकं हि तत् न ईश्वरा-भावं साधयितुं क्षमते इति नैयायिकानामभिप्रायः। ( का० ३-१० )

**संज्ञासंज्ञिसम्बन्धस्य उपमानविषयस्य शब्देन अनुमानेन वा न ग्रहण-मिति दर्शयति ( का० ३-११ )—**

संज्ञासंज्ञिसम्बन्धस्य ग्रहणं प्रत्यक्षादिभ्यो न सम्भवति, अतस्तद्ग्रहणाय उपमानं प्रमाणान्तरमङ्गीकरणीयमिति सिद्धान्तपक्षः पूर्वकारिकायां निर्धारितः। तत्र पूर्वपक्षी पुनः शङ्कते यदस्य संज्ञासंज्ञिसम्बन्धस्य ग्रहणं 'गोसदृशो गवयपदवाच्यः' इत्यतिदेश-वाक्यादेव यद्वा 'गवयत्वविशिष्टो धर्मी गवयपदवाच्यः' इत्यनुमानादपि सम्भवति अतस्तद्-ग्रहणाय उपमानं प्रमाणान्तरमनावश्यकं तन्निराकरणाय कारिकाया आरम्भः।

सिद्धान्तपक्षस्याऽयमाशयः यत् शाब्दव्यवहारे सर्वत्र जातिरेव प्रवृत्तिनिमित्तं लाघवात् कल्प्यते तथा चात्र गवयव्यवहारे गवयत्वमेव प्रवृत्तिनिमित्तं न तु सादृश्यादिकं तच्च गवयत्वं न गृहीतं तेन पुंसा, इति प्रवृत्तिनिमित्तस्य अज्ञातत्वात् न शब्देन नाप्य-नुमानेन सङ्केतग्रहः सम्भवति तदुक्तं कारिकायाम्—

'सादृश्यस्यानिमित्तत्वान्निमित्तस्याप्रतीतितः।
समयो दुर्ग्रहः पूर्वं शब्देनानुमयापि वा' ॥ ११ ॥

गोसादृश्यं न गवयपदप्रवृत्तिनिमित्तं गवयत्वमेव तत्र प्रयोजकं तच्च अगृहीतमिति उपमानात् पूर्वं शब्देन अनुमानेव वा समयः सङ्केतग्रहः 'दुर्ग्रहः' न सम्भवति इत्यर्थः। अतः संज्ञासंज्ञिसम्बन्धस्य ग्रहणार्थमुपमानप्रमाणमवश्यमेव अभ्युपेयमिति तच्च संज्ञासंज्ञि-सम्बन्धग्राहकमात्रं न तु ईश्वरस्य कस्याऽपि पदार्थान्तरस्य साधने बाधने समर्थम्। अतो नोपमानमीश्वरे बाधकमिति सिद्धान्तपक्षस्याभिप्रायः। ( का० ३-११ )

**उपमानविषयस्य संज्ञासंज्ञिसम्बन्धरूपशब्देन अनुमानेन वा ग्रहणं न सम्भवतीति उपमानं प्रमाणान्तरं मन्तव्यमेवेति दर्शयति ( का० ३-१२ )—**

अस्यां कारिकायां पूर्वपक्षो पुनः शब्दप्रमाणेन नैव सङ्केतग्रहो भवतीति पूर्वपक्ष-मुत्थापयति 'गोसदृशो गवयपदवाच्यः' इत्यतिदेशवाक्ये 'गोसदृश' इति पदे लक्षणया 'गवयत्वविशिष्टो धर्मी गवयपदवाच्यः' इत्यर्थं कृत्वा वने गोसदृशपिण्डदर्शनात् गवयत्व-ग्रहाच्च शब्दप्रमाणेनैव सङ्केतग्रहो भवतीति नोपमानं प्रमाणान्तरमिति पूर्वपक्षस्याशयः। तन्निराकरणाय कारिकाया आरम्भः।

सिद्धान्तपक्षस्याऽयमाशयः—पूर्वपक्षिणः 'गोसदृशो गवयपदवाच्यः' इत्यत्र 'गो-सादृश्य' इति पदस्य गवयत्वविशिष्टे या-लक्षणा कृता सा नोपपद्यते, मुख्यार्थबाधे हि लक्षणाया अवसरः, न चात्र मुख्यार्थबाधः तस्माल्लक्षणानुपपन्ना। तदुक्तं कारिकायाम्।

'श्रुतान्वयादनाकाङ्क्षं न वाक्यं ह्यन्यदिच्छति।'

अत्र वाक्ये श्रुतानां पदानामन्वये बाधाभावात् न लक्षणा। लक्षणा क्व भवति इत्युक्तं कारिकायां 'पदार्थान्वयवैधुर्यात्तदाक्षिप्तेन सङ्गतिः।' यदा पदार्थानामन्वय एव विधुरोऽ-नुपपन्नो भवति तदाऽऽक्षिप्तेन लक्ष्यार्थेन सङ्गतिः क्रियते अत्र च मुख्यार्थबाधाभावात् लक्षणासम्भवः अतो न शब्दप्रमाणेन संकेतग्रहः अतस्तद्ग्रहणाय उपमानं प्रमाणान्तरं स्वीकर्तव्यमेव। ( का० ३-१२ )

एवं शब्दस्य सङ्केतग्राहकत्वे निरस्ते पूर्वपक्षी अनुमानस्य सङ्केतग्राहकत्वं दर्शयति तत्र तेन अनुमानद्वयमुपन्यस्तम्।

१. 'गवयपदं सप्रवृत्तिनिमित्तकं साधुपदत्वात्' इत्येकं सामान्यतोदृष्टमनुमानम्। अत्र च साध्यतावच्छेदकरूपेणैव साध्यसिद्धेरनियमात् सप्रवृत्तिनिमित्तकत्वमेव सिद्ध्यति न गवयत्वप्रवृत्तिनिमित्तकत्वमिति दोषः।

२. 'गवयपदं गवयत्वप्रवृत्तिनिमित्तकम् इतराप्रवृत्तिनिमित्तकत्वे सति साधुपदत्वात्' इति द्वितीयं केवलव्यतिरेकि अनुमानम्, अत्र च साध्याप्रसिद्धिरदोषः।

एवं न शब्दतः नाप्यनुमानात् सङ्केतग्रहः अतः सङ्केतग्रहणाय उपमानं प्रमाणा-न्तरमवश्यमभ्युपेयमिति। किन्तु संज्ञासंज्ञिसम्बन्धग्रहणमात्रे तस्योपयोगः, न तु तदीश्वर-बाधने समर्थम्। अत एव उपमानप्रमाणमीश्वरे बाधकं न भवतीति सिद्धान्तपक्षस्य अभिप्रायः। ( का० ३-१२ )

**वैशेषिकमतं प्रत्याख्याय शब्दप्रमाणसाधनम् ( का० ३-१३ )—**

उपमानस्य ईश्वरे बाधकत्वं निरस्य इदानीं शब्दस्य ईश्वरबाधकत्वनिराकरणाय प्रकरणान्तरमारभते। तत्र पूर्वं वैशेषिकमतेन शब्दस्य बाधकत्वं निराकरोति। वैशेषिकाः हि शब्दं न प्रमाणान्तरं मन्यन्ते, किन्तु अनुमाने एव अन्तर्भावयन्ति। पदार्थसंसर्गबोधो हि शब्दप्रमाणस्य फलम्। स च अनुमानेनैव भवतीति तद्दर्शनाय इहानुमानद्वयं वैशेषिकैरुपन्यस्तम्।

१. 'एते पदार्थाः परस्परं संसर्गवन्तः योग्यता-आकांक्षा-आसत्तिमत्पदस्मारितत्वात्।' इत्येकमनुमानम्।

२. 'एतानि पदानि स्वस्मारितपदार्थसंसर्गप्रमापूर्वकाणि। योग्यताकांक्षासत्तिमत्पदत्वात्'।

अस्यानुमानद्वयस्य दूषणाय 'अनेकान्तःपरिच्छेदे' इत्यादि कारिकाया आरम्भः। तत्र कारिकायाः पूर्वार्द्धेन प्रथमानुमानस्य दूषणम्। उत्तरार्धेन च द्वितीयानुमानस्य दूषणम्। तथा हि—एते पदार्थाः परस्परं संसर्गवन्तः योग्यताऽऽकांक्षासत्तिमत्पदस्मारितत्वात् इत्यस्मिन् प्रथमेऽनुमाने संसर्गवन्तः इत्यस्य किम् अवश्यं संसर्गवन्तः इत्यर्थः? आहोस्वित् सम्भावितसंसर्गाः इति? तत्र यदि अवश्यं संसर्गवन्तः तर्हि 'पयसा सिञ्चति' इत्यत्र अनेकान्तिकत्वं दुग्धार्थकस्य 'पयसा' इति पदस्य सिञ्चनेन सह सम्बन्धाभावात्। तदुक्तं कारिकायाम्—'अनेकान्तःपरिच्छेदे'। परिच्छेदे अवश्यं सम्बन्धनिर्धारणे 'पयसा सिञ्चति' इत्यत्र अनैकान्तिकत्वम्। 'सम्भवे न च निर्णयः' यदि सम्भावितसंसर्गमात्रत्वमनुमीयते तदा न निर्णयः सम्बन्धस्य निश्चयो न भवति। अतो दोषग्रस्तं प्रथममनुमानम्।

द्वितीयानुमाने 'योग्यताकांक्षाऽऽसत्तिमत्पदत्वात्' इति यो हेतुः प्रयुक्तः तत्र 'आकांक्षा'-पदं न समन्वितं भवति शाब्दबोधे स्वरूपसती आकांक्षा उपयोगिनी भवति। अनुमाने तु ज्ञाता सती, अतो नाकांक्षायाः समन्वयः इत्युक्तं कारिकायाम् 'आकांक्षाया हेतोरिति।' यदि तु आकांक्षां विहाय योग्यासत्तिरेव हेतुत्वेनोपादीयेत तन्निराकरणाय कारिकायामुक्तं 'योग्यासत्तिरबन्धना' इति। 'अबन्धना' व्याप्तिशून्या इत्यर्थः। तथा हि 'अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यताम्' इत्यत्र राजपुरुषपदयोः परस्परसम्बन्धे योग्यतास्ति। आसत्तिरपि च विद्यते। किन्त्वाकांक्षाभावात् राजपदस्य पुरुषपदेन सह अन्वयो न भवति किन्तु पुत्रपदेन सह अन्वयो भवति, 'अयं राज्ञः पुत्र एति पुरुषोऽपसार्यताम्' इत्यस्य वाक्यस्यार्थो विवक्षितः। अतोऽनुमानद्वयमपि पदार्थसंसर्गनिर्णये अयोग्यम्, इति पदार्थसंसर्गनिर्णयाय शब्दप्रमाणमवश्यमभ्युपेयम्। ( का० ३-१३ )

**शब्दस्यानुवादकत्वं निवारयति ( का० ३-१४ )—**

मीमांसकेषु प्राभाकराः वेदवाक्यानां प्रमाणत्वं लौकिकवाक्यानाञ्च अनुवादकत्वं प्रतिपादयन्ति। तेषामयमेवाभिप्रायः यत् वेदस्यापौरुषेयत्वात् तत्र वक्तृज्ञानानुमाना-

सम्भवः। लौकिकवाक्येषु तु वक्तृज्ञानापेक्षमेव प्रामाण्यमिति 'अयं वक्ता स्वप्रयुक्तवाक्यार्थ-यथार्थज्ञानवान् भ्रमाद्यजन्यवाक्यप्रयोक्तृत्वात्' इत्यनुमानात् वक्तृज्ञानावच्छेदकतया तदुत्तरं वा 'एते पदार्थाः परस्परं संसृष्टाः वक्तृयथार्थज्ञानविषयत्वात्' इत्यनुमानाद्वा साक्षात् संसर्गसिद्धिः। तदनन्तरं वाक्यार्थमर्यादया संसर्गबोधेपि शब्दे ज्ञातज्ञापकत्व-रूपम् अनुवादकत्वमेव इति पूर्वपक्षे प्राप्ते तन्निराकरणाय 'निर्णीतशक्तेर्वाक्याद्धि' इत्यादि कारिकायाः आरम्भः।

सिद्धान्तपक्षस्यायमाशयः यत् लौकिकवाक्येषु पदार्थसंसर्गबोधकत्वं निर्धारितपूर्वं तद्वदेव वैदिकमिति निर्णीतशक्तेः वाक्यात् एव पूर्वं संसर्गनिर्णयः। अनुमाने च 'व्याप्ति-स्मृतिविलम्बेन' पश्चात् संसर्गनिर्णयः इति 'लिङ्गस्यैव अनुवादकत्वं न शब्दस्य' इत्युक्तं कारिकायाम्।

> निर्णीतशक्तेर्वाक्याद्धि प्रागेवार्थस्य निर्णये।
> व्याप्तिस्मृतिविलम्बेन लिङ्गस्यैवानुवादिता ॥ १४ ॥ ( स्पष्टः कारिकार्थः )

**लौकिकस्यापि शब्दप्रामाण्यस्यानुवादकत्वं निराकरोति (का० ३-१५)—**

वैदिकवाक्यानां प्रामाण्यं लौकिकवाक्यानां चानुवादकत्वमिति प्राभाकराणां पूर्व-पक्षः 'निर्णीतशब्दे वाक्याद्धि' इत्यादिकारिकया पूर्वं निरस्तः। इदानीं पूर्वपक्षी पुनरपि तमेव पूर्वपक्षमुत्थापयति प्रकारान्तरेण। तत्र तस्य इयं वाचोयुक्तिः यत् लौकिकवाक्येषु आप्तोक्तत्वनिश्चयः प्रामाण्यग्रहणायावश्यकः। आप्तोक्तत्वञ्च 'प्रकृतवाक्यार्थगोचर-यथार्थधीजन्यत्वम्।' तथा च वक्तृज्ञानावच्छेदकतया संसर्गसिद्धे पुनः वाक्यमर्यादया संसर्गनिश्चयः अनुवादरूप एव। इति लौकिकं वाक्यमनुवादकमेव। अस्य पूर्वपक्षस्य निरा-करणाय 'व्यस्तपुन्दूषण०' इत्यादि कारिकायाः आरम्भः। सिद्धान्तपक्षस्यायमाशयः यत् लौकिकेषु वाक्येषु आप्तोक्तत्वनिश्चयो नावश्यमपेक्ष्यते ( अनाप्तवाक्येषु तु योग्यता-ज्ञानाभावादेवान्वयबोधे विलम्बः )। अन्यथा वैदिकवाक्येष्वपि अपौरुषेयत्वनिश्चयो हेतु-र्वाच्यः तथा च सति 'अमी वैदिकाः पदार्थाः परस्परं संसर्गवन्तः व्यस्तपुन्दोषणाशंकैः पदैः स्मारितत्वात्' इति अनुमानात् संसर्गनिर्णये वैदिकवाक्यानामपि अनुवादकत्वं प्रसज्येत इत्युक्तं कारिकायाम्—

> व्यस्तपुन्दूषणाशंकैः स्मारितत्वात् पदैरमी।
> अन्विता इति निर्णीते वेदस्यापि न तत् कुतः ॥ १५ ॥

'अमी' वैदिकाः पदार्थाः 'अन्विताः' परस्परं संसर्गवन्तः 'व्यस्तपुन्दोषणाशंकैः पदैः स्मारितत्वात्' अपौरुषेयैर्पदैः स्मारितत्वात् इत्यर्थः इति संसर्गनिर्णये वेदस्यापि 'तत्' अनुवादकत्वं 'कुतो न' अवश्यं स्वीकार्यं भविष्यतीति भावः। तच्चायुक्तमिति लौकिकवाक्यानामपि नानुवादकत्वं किन्तु प्रामाण्यमेव इति सिद्धान्तपक्षस्याशयः। ( का० ३-१५ )

**शब्दस्य ईश्वरबाधकत्वनिराकरणम् ( का० ३-१७ )—**

सांख्यादयो ह्यनीश्वरवादिनः

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः।
अहङ्कारविमूढात्मा कर्ताहमिति मन्यते ॥

इति गीतावाक्यमीश्वराभावबोधकं मन्यन्ते एवंविधान्यन्यान्यपि वाक्यानि यत्र कुत्रचिदुपलभ्यन्ते तदवलम्बेनानीश्वरवादिनः शब्दप्रमाणस्य ईश्वरवादकत्वं प्रतिपादयन्ति। तत्समाधानार्थं 'न चासौ क्वचिदेकान्तः सत्त्वस्यापि प्रवेदनात्' ( का० ३-१७ ) इत्यादिकारिकायाः पूर्वार्द्धस्यारम्भः। तत्र सिद्धान्तपक्षस्यायमाशयः यत् आगमेषु सर्वत्रेश्वराभावबोधकान्येव वाक्यानि नोपलभ्यन्ते, किन्तु 'मत्तः सर्वं प्रवर्तते' इत्यादीनि वाक्यानि ईश्वरसत्तामपि प्रतिपादयन्ति। 'क्षित्यादिकं सकर्तृकं कार्यत्वाद् घटवत्' इत्यनुमानेन तत्सहकृतेन तर्केण चापि ईश्वरसिद्धिर्भवति। अतः ईश्वरसाधकानामागमानामनुमानतर्कादिभिरपि परिपुष्टिः जायते। अतः ईश्वरसाधकस्यागममात्रस्य मुख्यार्थत्वमवश्यमभ्युपगन्तव्यम्, तद्विरुद्धानामीश्वराभावबोधकानां वाक्यानाञ्च मुख्यार्थत्वं प्रबलतरप्रमाणविरोधादेव न सम्भवति। अतो यत्र तत्रोपलभ्यमानानामीश्वराभावबोधकानां वाक्यानां न मुख्यार्थत्वं न वा स्वार्थे तात्पर्यं किन्तु परमात्मनो निराकाररूपप्रतिपादनमेव तेषां प्रयोजनमिति 'निरञ्जनावबोधार्थो न च सन्नपि तत्परः' इति कारिकाया उत्तरार्द्धभागेन प्रतिपादितम्। ततश्च शब्दप्रमाणमीश्वरे बाधकं न भवति इति ग्रंथकर्तुरभिप्रायः ( का० ३-१७ )।

**अर्थापत्तेरीश्वरबाधकत्वनिराकरणम् ( का० ३-१८ )—**

इदानीं पूर्वपक्षी अर्थापत्त्या ईश्वराभावं साधयितुमुपक्रमते। तस्यायमभिप्रायः—यदि ईश्वरः सर्वज्ञो भवेत् तथा वेदोपदेशं विनापि प्रवर्त्तयेत् इति ईश्वरसत्त्वे वेदोपदेशानर्थक्यं प्राप्तम्। अतो वेदोपदेशानुपपत्तिरूपा अर्थापत्तिरेव ईश्वराभावसाधिका इति पूर्वपक्षः। तन्निराकरणाय 'हेत्वभावे फलाभावात्०' इत्यादिकारिकाया आरम्भः।

हेत्वभावे फलं न भवति इति प्रमाणरूपं हेतुं विना प्रमारूपं फलं नोपपद्यते इत्युक्तं 'प्रमाणेऽसति न प्रमा' प्रमाणाभावे च न प्रवृत्तिः प्रवृत्तेः ज्ञानसाध्यत्वात् इत्युक्तं 'तदभावात् प्रवृत्तिर्न'। अन्यथा कर्मपथेऽपि अदृष्टादेव सर्वकार्यसिद्धौ उपदेशानर्थक्यं स्यात् इत्युक्तं 'कर्मवादेप्ययं विधिः'। अतोऽर्थापत्तिर्न ईश्वरे बाधिका। वस्तुतस्तु अर्थापत्तिः प्रमाणमेव न भवति। अतो नास्याः ईश्वरे बाधकत्वमिति सिद्धान्तपक्षस्याशयः ( का० ३-१८ )।

**अर्थापत्तेः प्रमाणत्वं निराकरोति ( का० ३-१९ )—**

अर्थापत्तिर्नेश्वरे बाधिका इति पूर्वकारिकायामुक्तम्। इदनीमर्थापत्तिः प्रमाणमेव न भवति इति प्रतिपाद्यते। अर्थापत्तिवादिभिः मीमांसकैः अर्थापत्तेः द्वे लक्षणे कृते—

१. 'अनुपपद्यमानार्थदर्शनार्थतदुपपादिकीभूतार्थान्तरकल्पनमर्थापत्तिः' इत्येकं लक्षणम्। तत्र च 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्युदाहरणम्। दिवाभुञ्जानस्य पीनत्वमनुपपद्यमानोऽर्थः। रात्रिभोजनं च तदुपपादिकीभूतं इति दिवाभुञ्जानस्य पीनत्व-

दर्शनात् रात्रिभोजनमर्थापत्त्या गृह्यते इति अर्थापत्तिवादिनां मतम्। तन्निराकरणाय 'अनियम्यस्य०' इत्यादि कारिकायाः पूर्वार्द्धः। तत्र सिद्धान्तपक्षस्यायमाशयः यत् अनुपपद्यमानोऽर्थः सर्वदा व्याप्यो भवति। उपपादिकीभूतश्चार्थः सर्वदा व्यापको भवति तथा च अनुपपद्यमानार्थदर्शनात् उपपादिकीभूतस्य अर्थस्य यद् ज्ञानं तत् व्याप्यात् व्यापकज्ञानमेव अतोऽनुमानान्तर्गतमेव इति न अर्थापत्तिः पृथक् प्रमाणम्। इत्युक्तं कारिकायाम् 'अनियम्यस्य नायुक्तिः'। 'अनियम्यस्य' अव्याप्यस्य 'नायुक्तिः' नानुपपद्यमानता। व्याप्यस्यैवानुपपद्यमानता इत्यर्थः। 'नानियन्तोपपादकः'। 'अनियन्ता' अव्यापकः 'न उपपादकः' व्यापकस्यैव उपपादकत्वमित्यर्थः। अतोऽर्थापत्तेर्विषयः व्याप्तिगम्यः इत्यर्थः।

'विरुद्धयोः प्रमाणयोर्विषयव्यवस्थया विरोधापादनमर्थापत्तेर्विषयः' इति द्वितीयमर्थापत्तिर्लक्षणम्। तत्र च 'मा हिंस्यात्सर्वभूतानि' 'अग्नीषोमीयं पशुमालभेत' इति वाक्यद्वयमुदाहरणम्। अस्य निराकरणाय कारिकायामुक्तं—'ना मानयोर्विरोधोऽस्ति' इति। न हि वास्तविकयोर्मानयोर्विरोध उपपद्यते। तथा सति एकं मानं भज्येत। एवंविधे स्थले विषयव्यवस्था पूर्ववत् एव विधेत। तस्याश्च ज्ञानमनुमानविधयैव संभवतीति न तत्कृतेऽपि अर्थापत्तिः प्रमाणमपेक्षते।

यदि च एवमपि अर्थापत्तिः पृथक् प्रमाणमिष्यते तथा 'प्रसिद्धे वाप्यसौ समा'। 'प्रसिद्धेऽपि' अनुमानस्थले 'असौ' अर्थापत्तिरेव स्यात् इति अनुमानविलोपः। धूमो हि अनुपपद्यमानोऽर्थः। वह्निश्च उपपादिकीभूतोऽर्थः अतो धूमात् वह्निज्ञानम् अर्थापत्तिविधयैव भवेत्। अनुमानविलोपश्च स्यात्। स चानिष्टः इति न अर्थापत्तिः पृथक् प्रमाणम्। (का० ३-१९)

**उपलब्धेः प्रमाणान्तरत्वखण्डनम् (का० ३-२०)—**

तृतीयस्तबकस्य प्रारम्भे अनुपलब्धिर्नाभावसाधिका किन्तु योग्यानुपलब्धिरेव इति अनुपलब्धेः ईश्वराभावसाधकत्वं निरस्तम्। इदानीं स्तबकान्ते अनुपलब्धिः प्रमाणमेव न भवति इति तस्या ईश्वराभावसाधकत्वं कारिकात्रयेण पुनर्निरस्यते। अनुपलब्धिप्रमाणवादिनः अभावग्रहणाय अनुपलब्धिं प्रमाणं मन्यन्ते। किन्तु नैयायिकमते अभावग्रहणे इन्द्रियमेव करणम्। अतः प्रत्यक्षेणैव अभावग्रहणम् इति नानुपलब्धिः प्रमाणम् इत्येवाग्रे कारिकात्रयेण साध्यते। तत्र, द्वितीयकारिकोक्तम् 'इन्द्रियाणि अभावग्रहे करणानि' इति प्रतिज्ञावाक्यम् तत्साधनाय चत्वारो हेतवः प्रथमकारिकायां (३-२०) चत्वारश्च द्वितीयकारिकायाम् (३-२१) उक्ताः।

१. 'प्रतिपत्तेरपारोक्ष्यात्' इति प्रथमो हेतुः। तस्यायं भावः यत् अभावप्रतीतिरपरोक्षः भवति। जन्यापरोक्षज्ञानस्य च इन्द्रियजन्यत्वनियमात् अभावग्रहणम् इन्द्रियजन्यमेव।

२. 'इन्द्रियस्यानुपक्षयात्' इति द्वितीयो हेतुः। अनुपलब्धिप्रमाणवादिनोऽधिकरण-

ग्रहणे इन्द्रियस्य शक्तिरुपक्षीयते इति नेन्द्रियमभावग्रहणे समर्थमिति वदन्ति । तन्निवारणाय कारिकायाम् 'इन्द्रियस्यानुपक्षयात्' इत्युक्तम् । अधिकरणग्रहणात्मके अवान्तरव्यापारे इन्द्रियस्य शक्तिर्न क्षीयते । अन्यथा घटग्रहणस्थलेऽपि इन्द्रियार्थसन्निकर्षरूपे अवान्तरव्यापारे इन्द्रियशक्तेरुपक्षीणत्वात् इन्द्रियं घटग्रहणे समर्थं न स्यात् ।

३. 'अज्ञातकरणत्वाच्च' इति तृतीयो हेतुः । ज्ञानकरणं ज्ञानं परोक्षं भवति । अनुमाने लिङ्गज्ञानम् उपमाने सादृश्यज्ञानं शाब्दबोधे च पदज्ञानं करणमिति ज्ञानकरणत्वात् अनुमाने उपमानशब्दप्रमाणजन्यानि सर्वाण्यपि ज्ञानानि परोक्षाणि अभावस्य ग्रहणं तु न ज्ञानकरणकम् । इति अपरोक्षम् इन्द्रियजन्यं च ।

४. 'भाववैषाच्च चेतसः' इति चतुर्थो हेतुः । सर्वं ज्ञानं भावभूतकरणसहकृतेन मनसा जन्यते, अत एव अभावग्रहणेऽपि भावभूतं करणम् इन्द्रियमेव मनसः सहकारित्वेनाभ्युपेयम् । अतः इन्द्रियमेवाभावग्रहे करणम् नानुपलब्धिः इति प्रथमकारिकाया भावार्थः ( का० ३-२० ) ।

१. अभावग्रहणे इन्द्रियमेव करणम् इत्यस्याः एव प्रतिज्ञायाः साधनाय अस्यामपि कारिकायां चत्वारो हेतवः उपन्यस्ताः । तत्र 'प्रतियोगिनि सामर्थ्यात्' इत्ययं प्रथमो हेतुः । अनुमानस्थले यथा अनुमानेनैव घटस्य तदभावस्य च ग्रहणं भवति । एवमभावग्रहणस्थले इन्द्रियं प्रतियोगिनो घटस्य ग्राहकमिति घटाभावस्यापि ग्राहकमिन्द्रियमेव ।

२. 'व्यापाराव्यवधानतः' इति द्वितीयो हेतुः । अवान्तरव्यापारेण इन्द्रियस्य शक्तिः न क्षीयते इति पूर्वकारिकायामुक्तम् अन्यथा इन्द्रियसन्निकर्षादिरूपे अवान्तरव्यापारे उपक्षीणमिन्द्रियं घटग्रहणेऽपि नालं स्यात् ।

३. 'अक्षाश्रयत्वाद्दोषाणाम्' इति तृतीयो हेतुः । भ्रमस्थले कारणदोष एव सर्वत्र कारणं मन्यते । अतोऽभावभ्रमस्थलेऽपि करणदोषस्यैव प्रयोजकत्वं स्वीकार्यम् । अभावग्रहे इन्द्रियं चेत् करणं तदा इन्द्रियदोषः अभावभ्रमे कारणम् । अनुपलब्धिश्चेत् करणं तर्हि अनुपलब्धिनिष्ठो दोषस्तत्र कारणम् । अनुपलब्धेश्चाभावरूपत्वात् न दोषाधिकरणत्वमुपपद्यते । पाण्डुरोगादौ च इन्द्रियमेव दोषाधिकरणं भवति इति अभावभ्रमे इन्द्रियाश्रितो दोष एव कारणम् । अत इन्द्रियमेवाभावग्रहे करणम् ।

४. 'विकल्पनात्' इति चतुर्थो हेतुः । विशिष्टज्ञानात् इत्यर्थः । घटाभाववद्भूतलम् इत्यत्र घटाभावो विशेषणम्, भूतलं च विशेष्यम् । इति विशेषणविशेष्यभावयुक्तमेव विशिष्टज्ञानम् । तत्र यदि भावग्रहणाय प्रत्यक्षम् अभावग्रहणाय चानुपलब्धिः पृथक् प्रमाणमिति मन्यते तदा घटाभाववद्भूतलमिति विशिष्टज्ञानं न इन्द्रियजन्यमभावधीत्वात् । नानुपलब्धिजन्यं भावधीत्वात् । इति विशिष्टज्ञानस्य ग्रहणं केनापि प्रमाणेन न भवेत् । अतो घटग्रहणवत् घटाभावग्रहणेऽपि इन्द्रियमेव कारणम् इत्यस्याः कारिकाया अभिप्रायः ( का० ३-३१ ) ।



## चतुर्थः स्तबकः

### ईश्वरस्य प्रमाणत्वं तज्ज्ञानस्य प्रमात्वसाधनञ्च ( का० ४-१ )—

'सत्त्वेऽपि तस्याप्रमाणत्वात्' इति तुरीयः विप्रतिपत्तिर्दिगम्बराणाम् । तन्त्रतः 'अगृहीतग्राहि ज्ञानं प्रमा' इति प्रमालक्षणम् । ईश्वरस्य च सर्वज्ञत्वाभ्युपगमात् तज्ज्ञानं नागृहीतग्राहि अतो न प्रमा । स्वज्ञानस्य प्रमात्वाभावाच्च ईश्वरो न प्रमाणमप्रमाण-पुरुषस्य च वचः कः श्रद्दधीत इति 'सत्त्वेपि तस्याप्रमाणत्वात्' इत्यस्याः विप्रतिपत्तेरभि-प्रायः । सा च 'अगृहीतग्राहि ज्ञानं प्रमा' इति प्रमालक्षणमाश्रित्य उत्पद्यते । अस्याः निराकरणाय 'अप्राप्तेरधिक०' इत्यादिकारिकायाः आरम्भः ।

नैयायिकमते 'अगृहीतग्राहि ज्ञानं प्रमा' इति प्रमालक्षणं नाभ्युपगम्यते । 'अयं घटः अयं घटः' इत्यादि धारावाहिकबुद्धिस्थले द्वितीयादिज्ञानमगृहीतग्राहि ज्ञानं न भवति इति तत्र प्रमालक्षणस्य अव्याप्तिः । 'इदं रजतम्' इति भ्रमस्थले च तज्ज्ञानस्यागृहीतग्राहि-त्वात् प्रमालक्षणमतिव्याप्तमित्युक्तम् 'अप्राप्तेरधिकप्राप्तेरलक्षणमपूर्वदृक्' । धारावाहिकबुद्धि-स्थले अव्याप्तत्वात् भ्रमस्थले च अतिव्याप्तत्वात् 'अपूर्वदृक्त्वम्' अगृहीतग्राहित्वे 'अलक्षणं' प्रमालक्षणं न भवतीत्यर्थः । सिद्धान्तपक्षः स्वमते प्रमालक्षणमाह । 'यथार्था-नुभवो मानमनपेक्षतयेष्यते' इत्यादि 'यथार्थानुभवः प्रमा' इति प्रमालक्षणमित्यर्थः । 'अन-पेक्षतया' इति पदं स्मृतौ अतिव्याप्तिनिराकरणाय, 'यथार्थानुभवः प्रमा' इति प्रमा-लक्षणमीश्वरज्ञानेऽपि अविरुद्धमिति ईश्वरः प्रमाणमेव नाप्रमाणमिति ग्रन्थकारस्याभि-प्रायः ( का० ४-१ ) ।

### ज्ञाततास्खण्डनम् ( का० ४-२ )—

'अगृहीतग्राहिज्ञानं प्रमा' इति प्रमालक्षणमभ्युपेत्य ईश्वरस्य सर्वज्ञत्वात् तज्ज्ञाने अगृहीतग्राहित्वं नोपपद्यते इति ईश्वरज्ञानं न प्रमा । अत ईश्वरः न प्रमाणमिति पूर्व-पक्षः उपस्थितः आसीत् । अस्मिन् प्रमालक्षणे धारावाहिकबुद्धिस्थले अतिव्याप्तिं दर्श-यित्वा पूर्वपक्षोऽयं प्रथमकारिकायां प्रत्याख्यात आसीत् । तत्र पूर्वपक्षी पुनः प्रत्यवतिष्ठते यत् धारावाहिकबुद्धिस्थले अगृहीतग्राहित्वस्य नाव्याप्तिः । प्रथमक्षणे यो घटः गृहीत-स्तत्र विभिन्नो ज्ञातताधर्मः । द्वितीयक्षणे गृह्यमाणे च घटे पूर्वस्मात् ज्ञातताधर्मात् विभिन्नो ज्ञातताधर्माः इति ज्ञातताधर्मभेदात् घटद्वयेऽपि भेदोऽभ्युपेयः । ततश्च ज्ञातता-धर्मभेदात् द्वितीयादिज्ञानमगृहीतग्राहिज्ञानमेव इति नाव्याप्तिः । इति पूर्वपक्षस्याशयः ।

अत्र घटे ज्ञातताधर्ममवलम्ब्य अव्याप्तिः परिहृता । ज्ञातताधर्मविषये मीमांस-कानामयं सिद्धान्तः । यत् घटज्ञानस्य विषये घट एव भवति न पटः । इत्यत्र विषयता-नियमार्थं घटज्ञानजन्यो घटनिष्ठो ज्ञातता नाम धर्मोऽभ्युपेयः, तञ्च धर्ममाश्रित्य धारा-वाहिकबुद्धिस्थले घटभेदात् अगृहीतग्राहित्वस्य नाव्याप्तिः अत्र नैयायिकाः ज्ञातता-

धर्मं परिहरन्ति। तन्मते घटज्ञानयोः स्वाभाविक एव विषयविषयिभावः। न ज्ञातताकृतः। ज्ञाततामूलके विषयविषयिभावेऽभ्युपगम्यमाने अतीतानागतयोर्विषयत्वं न स्यात्। वर्तमानेऽर्थे ज्ञाततासम्भवेऽपि अतीतानागतयोरर्थयोरेवाविद्यमानत्वात् न तत्र ज्ञातता इति न तयोर्विषयविषयिभावः। तस्मात् विषयविषयिभावः स्वाभाविक एव मन्तव्य इति सर्वमभ्युपेत्य कारिकायामुक्तं 'स्वभावनियमाभावादुपकारो हि दुर्घटः'।

विषयज्ञानयोः स्वाभाविक एव विषयविषयिभावो मन्तव्यः। अन्यथा स्वीकृतेऽपि ज्ञातताधर्मे 'उपकारो हि दुर्घटः' विषयविषयिभावव्यवस्था उपपादयितुमशक्या। 'सुघटत्वेपि सत्यर्थे' विद्यमानेऽर्थे ज्ञाततामूलके विषयविषयिभावे सुघटे सत्यपि 'असति' अविद्यमाने अतीते अनागते वाऽर्थे 'का गतिः' न हि तत्र ज्ञाततामूलको विषयविषयिभावः। अतीतानागतयोरर्थयोराधारभूतयोरभावात् न तत्राधेयभूता ज्ञातता। अतो विषयतानियमार्थं तत्रावश्यं स्वाभाविक एव सम्बन्धो नियामकः इति मन्तव्यम्। इति ज्ञातताबलम्बेन धारावाहिकबुद्धिस्थले द्वितीयादिज्ञाने नाव्याप्तिनिरासः। अतः तद्दुष्टमेव प्रमालक्षणम्। ( का० ४-२ )

## पुनरपि ज्ञातताखण्डनम् ( का० ४-३ )—

'या या क्रिया सा सा कर्मनिष्ठकिञ्चिज्जनिका' इति व्याप्तिमवलम्ब्य पूर्वपक्षी ज्ञानक्रियया घटे ज्ञातताधर्मोत्पत्तिं साधयति, तन्निराकरणाय 'अनैकान्तादसिद्धेर्वा०' इत्यादिकारिकायाः आरम्भः। ज्ञानक्रियया घटनिष्ठज्ञातताधर्मसिद्धौ, हेतोरनैकान्तिकत्वं स्वरूपासिद्धत्वं वा इति क्रिया ज्ञातता सिद्धौ लिंगं न भवति। तथा हि क्रियाशब्दस्य १. धात्वर्थः, २. करणव्यापारः, ३. स्पन्दश्चेति त्रयोऽर्थाः सम्भवन्ति। तत्राद्ये 'शरेण गगनं युनक्ति' इत्यत्र युजधात्वर्थेन गगननिष्ठकिंचिदजननादनैकान्तिकत्वम्। द्वितीये चक्षुषा घटं पश्यति इत्यत्र इन्द्रियसंयोगादिना करणव्यापारेण घटनिष्ठकिञ्चिदजननात् अनैकान्तिकत्वम्। तृतीयज्ञानस्य स्पन्दनात्मकत्वात 'यो हेतुः आश्रयेणावगम्यते स स्वरूपासिद्धः' इति लक्षणात् स्वरूपासिद्धो हेत्वाभासः। एवमनैकान्तिकत्वात् स्वरूपासिद्धत्वात् वा क्रिया इह ज्ञातता सिद्धौ लिंगं न भवति इत्युक्तम्—'अनैकान्तादसिद्धेर्वा न च लिङ्गमिह क्रिया।'

एवमनुमानेन न ज्ञाततासिद्धिः इति पूर्वपक्षे निराकृते पूर्वपक्षी 'ज्ञातो घटः' साक्षात् कृतो घटः इत्यादिप्रत्यक्षे ज्ञाततां विषयत्वेनाङ्गीकृत्य प्रत्यक्षबलेन ज्ञाततां साधयति, तन्निराकरणाय—'तद्वैशिष्ट्य०' इत्यादिकारिकायाः उत्तरार्द्धः। तस्यायं भावः—ज्ञातो घटः इति बुद्धिः 'दण्डिपुरुषः' इति बुद्धिवत् विशिष्टबुद्धिः। विशिष्टबुद्धौ च विशेषणं विशेष्यं तयोः सम्बन्धश्चेति त्रयमेव भासते। यथा दण्डी पुरुषः इत्यत्र १. विशेषणभूतो घटः २. विशेषभूतः पुरुषः ३. तयोः संयोगसम्बन्धश्चेति त्रयं भासते। एवं ज्ञातो घट इत्यत्र १. विशेषणभूतं ज्ञानम् २. विशेष्यभूतो घटः, ३. स्वरूपसम्बन्धश्चेति त्रयमेव भासते। अतोऽधिकं

ज्ञातताधिकं किंचिदत्र भासते इत्युक्तम्–'तद्वैशिष्ट्यप्रकाशत्वान्नाध्यक्षानुभवोऽधिके ।' 'अधिके ज्ञाततादिरूपे धर्मे 'नाध्यक्षानुभवः' न प्रत्यक्षानुभव इत्यर्थः । तस्मात् नानुमानात् नापि प्रत्यक्षबलात् ज्ञातता सिद्ध्यति । अतो ज्ञातताधर्ममवलम्ब्य यो विषयविषयिभावो मीमांसकैः व्यवस्थाप्यते । यच्च धारावाहिकबुद्धिस्थले अव्याप्तिनिराकरणं तैः क्रियते तदुभयमपि न समीचीनम् इति ग्रन्थकर्त्तुरभिप्रायः ।

एवमपि चेत् ज्ञातो घटः इति प्रतीतिबलात् ज्ञातताम्भ्युपगच्छति पूर्वपक्षी तदा 'कृतो घटः', 'दृष्टो घटः' इत्यादिप्रतीतिभ्यो घटे दृष्टताकृततादयो बहवो धर्माः स्वीकर्त्तव्याः स्युः । ते चानुपपन्ना इति ज्ञाततापि अनुपपन्ना । 'ज्ञातो घटः' 'कृतो घटः', इत्यादिषु प्रतीतिषु घटस्यैक्येऽपि यो भेदो दृश्यते स क्रियासम्बन्धादेव भवति । न ज्ञानतादिधर्मसम्बन्धात् । यथा निराकारेऽपि ज्ञाने घटपटादिविषयसम्बन्धात् घटज्ञानं पटज्ञानं इति भिन्नाकारा प्रतीतिः । एवं एकस्मिन्नपि घटे दर्शनज्ञानादिक्रियाभेदात् 'दृष्टो घटः' 'ज्ञातो घटः' इत्यादिभिन्नाकारा प्रतीतिः । न तु ज्ञाततादिधर्मबलात् इत्यस्मिन्नर्थे वृद्धसम्मतिं प्रमाणयति—

अर्थेनैव विशेषो हि निराकारतया धियाम् ।<br>क्रिययैव विशेषो हि व्यवहारेषु कर्मणाम् ॥ ( का० ४–३ )

